इमं मा हिंᳪसीरेकशफं पशुं कनिक्रदं वाजिनं वाजिनेषु । गौरमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद ॥ गौरं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु ॥ ४८ ॥

अथाश्वस्य । इमं मा हिंसीः एकशफं पशुम् एकशफो वा एष पशुर्यदश्वः । कनिक्रदम् अत्यर्थं क्रान्दितारम् वाजिनं वेगवन्तम् वेगवत्सु मध्ये व्यवस्थितम् । गौरम् गौरमृगम् अनुदिशामि ते तव । तेन चिन्वान इति व्याख्यातम् ॥ ४८ ॥

अथाश्वस्य । हे अग्ने ! इममेकशफमेकखुरं पशुमश्वं मा हिंसीः। एकशफो वा एष पशुर्यदश्व इति ( ७, ५, २, ३३ ) श्रुतेः । कीदृशं कनिक्रदमत्यन्तं क्रन्दितारं ह्रेषमाणम् । कन्देर्दाधर्तीत्यादिना ( पा० ७, ४, ६५ ) यङ्लुकि निपातः । वाजा वेगो विद्यते येषां ते वाजिनः वेगवन्तः । मत्वर्थे इनप्रत्ययः । तेषु मध्ये वाजिनं वेगवन्तम् । ते तुभ्यमारण्यं वनस्थं गौरं गौरवर्णं मृगं दिशामि ददामि तेन तन्वः चिन्वानो निषीदेति पूर्ववत् । ते तव शुग्गौरं गच्छतु ॥ ४८ ॥

इमᳪ साहस्रᳪ शतधारमुत्सं व्यच्यमानᳪ सरिरस्य मध्ये । घृतं दुहानामदितिं जनायाग्ने मा हिंᳪसीः परमे व्योमन् ॥ गवयमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद । गवयं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु ॥ ४९ ॥

अथ गौः । इमं साहस्रम् । इमङ्गां साहस्रम् सहस्रार्हम् शतधारमुत्सम् उत्सः कूपः । बहुस्रोतसमिव कूपम् उपकारकम् बाहदोहादिभिः व्यच्यमानं सरिरस्य मध्ये । विविधमच्यमानमुपजीव्यमानम् सरिरस्य मध्ये । इमे वै लोकाः सरिरमित्यादिश्रुतिः । घृतं दुहानाम् अदितिमदीनाम् जनाय मनुष्येभ्योऽर्थाय । पुंलिङ्गस्त्रीलिङ्गाभ्यां मन्त्रे गौः स्तूयते । अग्ने मा

हिंसीरित्यादि व्याख्यातम् ॥ ४९ ॥

अथ गौः । अत्र विशेषणद्वयं स्त्रीलिङ्गं शेषाणि पुंलिङ्गानि व्यत्ययेन उभाभ्यां गौरेव स्तूयते । हे अग्ने । परमे व्योमन् उत्कृष्टे स्थाने स्थितमिमं गोरूपं पशुं त्वं मा हिंसीः । कीदृशं साहस्रं सहस्रमूल्यार्हं सहस्रोपकारक्षमं वा । शतधारं शतसंख्याकक्षीरधारायुतमत एवोत्सम् उत्सः कूपः तत्सदृशम उत्स इवोत्सस्तं बहुस्रोतसमित्यर्थः । सरिरस्य मध्ये एषु लोकेष्वन्तः व्यच्यमानं जनैर्विविधमच्यमानमुपजीव्यमानम् । इमे वै लोकाः सरिरमिति ( ७-५, २, ३४ ) श्रुतेः । जनाय सर्वलोकाय घृतं दुहानां घृतकारणं क्षीरं क्षरन्तीम् । अदितिमखण्डिताम् । ते तवारण्यं गवयं गोसदृशं पशुविशेषमनुदिशामि । शिष्टमुक्तम् ॥ ४९ ॥

इ॒मम्मूर्णा॒युं वरु॑णस्य॒ नाभिं॒ त्वचं॑ पशू॒नां द्वि॒पदा॒ञ्चतु॑ष्पदाम् । त्वष्टुः॑ प्र॒जानां॑ प्रथ॒मं ज॒नित्र॒मग्ने॒ मा हिंᳪसीः पर॒मे व्यो॑मन् ॥ उष्ट्र॑मार॒ण्यमनु॑ते दिशामि॒ तेन॑ चिन्वा॒नस्त॒न्वो॒ निषी॑द । उष्ट्रं॑ ते॒ शुगृ॑च्छतु॒ यं द्वि॒ष्मस्तं ते॒ शुगृ॑च्छतु ॥ ५० ॥

अथावेः । इममूर्णायुम् । इमम् ऊर्णायुम् ऊर्णावन्तम् । वरुणस्य नाभिम् वरुणस्य नहनम् अपत्यम् त्वचं पशूनां द्विपदाश्चतुष्पदाश्च । उभयरूपाणां पशूनां त्वग्रक्षणं करोति कम्बलादिनेत्याशयः । किञ्च । त्वष्टुः प्रजानां प्रथमं जनित्रम् एतच्च त्वष्टा प्रथमं रूपं चकारेति श्रुतिः । जनित्रञ्जनम् । व्याख्यातमन्यत् ॥ ५० ॥

अथावेः । हे अग्ने । परमे व्योमन् स्थाने स्थितमिममविं मा हिंसीः । कीदृशमूर्णायुमूर्णावन्तमूर्णाया युस् । वरुणस्य नाभिं नाभिस्थानीयं प्रियमपत्यमित्यर्थः । द्विपदां नराणां चतुष्पदां गवादीनामुभयरूपाणां पशूनां त्वचम् त्वचमिव त्वचम् त्वग्रक्षकं कम्बलैः छादकत्वात् मनुष्याः शीतनिवृत्त्यै कम्बलं दधते अश्वगोखराद्या अपि मार्दवाय पृष्ठे कम्बलैराच्छाद्यन्ते । तथा त्वष्टुः प्रजापतेः

प्रजानां मध्ये प्रथमं जनित्रं प्रथमोत्पन्नम् । एतद्ध त्वष्टा प्रथमᳫं रूपं विचकारेति ( ७. ५, २, ३५ ) श्रुतेः । उष्ट्रं प्रसिद्धं ते दधामि । स्पष्टमन्यत् ॥ ५० ॥

अजो ह्यग्नेरजनिष्ट शोकात्सो अपश्यज्जनितारमग्रे । तेन देवा देवतामग्रमायँस्तेन रोहमायन्नुप मेध्यासः ॥ शरभमारण्यमनु ते दिशामि तेन चिन्वानस्तन्वो निषीद । शरभं ते शुगृच्छतु यं द्विष्मस्तं ते शुगृच्छतु ॥ ५१ ॥

अथाजस्य । अजो हि । यः अजः अग्नेः अजनिष्ट जातः । शोकात्सन्तापात् । यद्वै प्रजापतेः शोकादजायतत दग्नेः शोकादजायत इति श्रुतिः । हि शब्दः पादपूरणः । सः अपश्यत् जनितारञ्जनयितारं प्रजापतिम् । अग्रे प्रथमम् यथासौ द्रष्टव्यः । तेन च देवा इन्द्रादयः । देवतामग्रमायन् नायन्देवात्तलिति स्वार्थिकः किन्तर्हि । तस्य भावस्त्वतलाविति भावे प्रत्ययः षष्ठ्यर्थे चेयं द्वितीया देवत्वस्याग्रमायन्निति शब्दप्रकरणात् । तेनैवाजेन रोहं स्वर्गम् अयन् उपागच्छन्तु । मेध्यासः यज्ञेया देवाः । लोकप्रसिद्धाः शरभादयो व्याख्येयाः ॥ ५१ ॥

अथाजस्य । हि पादपूरणः । योऽजोऽग्नेः प्रजापतेः शोकात् सन्तापादजनिष्ट उत्पन्नः शोकाद्दीप्यमानादग्नेः शोकादजायतेति (७, ५, २, ३६ ) श्रुतेः । आत्मनो वपामुदखिदत्तामग्नौ प्रगृह्णात्ततोऽजस्तूपरः समभवदिति तैत्तिरीयेऽपि । स उत्पन्नोऽजोऽग्रे प्रथममुत्पन्नं नरमेव जनितारं स्वोत्पादकं प्रजापतिमपश्यद् दृष्टवान् । किञ्च एवं प्रशस्तोऽजस्ततो देवा इदानीन्तना अग्रं पूर्वजन्मनि तेनाजेन कर्म कृत्वेति शेषः देवतां देवभावमायन् प्राप्ताः तस्य भावस्त्वतलौ । किञ्च मेध्यासः मेध्या यज्ञयोग्या यजमाना रोहं रोहणीयं स्वर्गं तेनाजेनोपायन् उपगच्छन्ति । छन्दसि परेऽपि शरभोऽष्टापदो मृगविशेषः सिंहघाती । शेषमुक्तम् ॥ ५१ ॥

**त्वं यविष्ठ दाशुषो नॄँः पाहि शृणुधी गिरः । रक्षा तोकमुत त्मना ॥ ५२ ॥**

चित्योपस्थानम् । त्वं यविष्ठ । गायत्र्याग्नेय्यनिरुक्ता । त्वं हे यविष्ठ युवतम । यद्वा यु मिश्रणे । अतिशयेन मिश्रयितृतम । दाशुषः दत्तवतो हवींषि यजमानस्य नॄन्मनुष्यान् पाहि-पालय । शृणुधि च गिरः स्तुतिलक्षणा वाचः । किञ्च रक्षातोकमपत्यम् । उत त्मना । अपिच आत्मानं रक्षेति । श्रुत्युक्तोव्यत्ययः ॥ ५२ ॥

का० ( १७, ६, १ ) एत्य च त्वं यविष्ठेति चित्योपस्थानम् । बहिर्वेदेरागत्याग्निसमीपेऽर्धचित्यमुपतिष्ठते ॥ उशनोदृष्टानिरुक्ताग्नेयी गायत्री । हे यविष्ठ युवतम ! यद्वा मिश्रयितृतम ! गिरोऽस्मदीयाः स्तुतिवाचः शृणुधि शृणु श्रुशृण्वित्यादिना (पा० ६, ४, १०२) हेर्धिः अन्येषामपि दृश्यत इति संहितायां दीर्घः । गिरः श्रुत्वा दाशुषो हविर्दत्तवतो यजमानान् नॄन् मनुष्यान् पाहि रक्ष दाशुष इति षष्ठी वा यजमानस्य नॄन् पाहीति । दाश्वान्साह्वान्मीढ्वांश्चेति निपातः । किञ्च उतापि च त्मना आत्मना तोकं यजमानापत्यं रक्ष द्व्यचोऽतस्तिङ इति संहितायां दीर्घः । मन्त्रेष्वाङ्यादेरात्मन इति आकारलोपः । तोकमपत्यमुतात्मानं च रक्षेति विभक्तिव्यत्ययो वा ॥ ५२ ॥

**अपां त्वेमन् सादयामि । अपां त्वोद्मन् सादयामि अपां त्वा भस्मन् सादयामि । अपां त्वा ज्योतिषि सादयामि । अपां त्वायने सादयामि । अर्णवे त्वा सदने सादयामि । समुद्रे त्वा सदने सादयामि । सरिरे त्वा सदने सादयामि । अपां त्वा क्षये सादयामि । अपां त्वा सधिषि सादयामि । अपां त्वा सदने सादयामि । अपां त्वा सधस्थे सादयामि । अपां त्वा योनौ सादयामि । अपां त्वा पुरीषे सादयामि । अपां**

**त्वा पार्थसि सादयामि । गायत्रेण त्वा छन्दसा सादयामि । त्रैष्टुभेन त्वा छन्दसा सादयामि । जागतेन त्वा छन्दसा सादयामि । आनुष्टुभेन त्वा छन्दसा सादयामि । पाङ्क्तेन त्वा छन्दसा सादयामि ॥ ५३ ॥**

पञ्चदशच्छन्दस्याः पञ्चदशभिर्यजुभिरुपदधाति । अपां त्वेमन्सादयामि । श्रुत्युक्तान्यभिधेयानि । अपां त्वा एमन् । सप्तम्या लुक् । एमनि । इण, तगौ । अस्य मनिष्प्रत्ययान्तस्यै तद्रूपम् । वायुर्वा अपामेमन् । वायौ तां सादयति । अपां त्वाओन्नन् । उन्दी क्लेदने । ओषधयो वा अपामोन्नन् तुल्यव्याख्यानमन्यत् । भस्मन् । भस भर्त्सनदीप्त्योः । अभ्रं वा अपांभस्मत् । ज्योतिषि । विद्युद्वा अपाञ्ज्योतिः । अयने । इयं पृथिवी अपामयनम् । अर्णवे । प्राणो वा अपामर्णवः । समुद्रे । मनो वै समुद्रः । सरिरे । वाग्वै सरिरम् । क्षये । चक्षुर्वा अपांक्षयो निवासः । साधिषि । श्रोत्रं वा अपां साधिः । सदने द्यौर्वा अपां सदनम् । सधस्थे । अन्तरिक्षम् वा अपां सधस्थम् । योनौ । समुद्रो वा अपां योनिः । पुरीषे । सिकता वा अपां पुरीषम् । पाथसि । अन्नं वा अपां पाथः । अन्ने तां सादयति । पञ्चच्छन्दस्याः पञ्चभिर्यजुर्भिरुपदधाति गायत्रेण त्वा च्छन्दसा सादयामीत्यादि ॥ ५३ ॥

का० ( १७, ६, २ ) अपरेण स्वयमातृण्णामेत्यापस्याः पञ्चपञ्चानूकान्तेष्वपां त्वेमन्निति प्रतिमन्त्रम् । तीर्थेनाग्निमारुह्य स्वयमातृण्णामपरेण पूर्वानूकान्तमेत्य चतुर्ष्वप्यनूकान्तेष्वपां त्वेमन्निति प्रतिमन्त्रं पञ्चपञ्चापस्यासंज्ञा इष्टका उपदधातीति सूत्रार्थः ॥ विंशतिरिष्टकादेवत्यानि यजूंषि पञ्चदशापस्यादेवत्यानि पञ्च छन्दस्यादेवत्यानि । हे इष्टके अपस्ये ! अपामेमन् एमनि वायौ त्वा त्वां सादयामि स्थापयामि । इण् गतौ मनिन्प्रत्ययः सप्तम्या लुक् । त्वा

इत्यस्य पररूपम् ( पा० ६, १, ९४ वा ६ ) तत्रापामेमन्नित्यादीनां श्रुत्योक्तोऽर्थो ग्राह्यः । वायुर्वा अपामेम वायौ त्वाऽँ सादयामीति ( ७, ५, २, ४६ ) श्रुतेः ॥ अपामोद्मन् ओद्मनि ओषधिषु त्वां सादयामि । उन्दी क्लेदे मन्नलोपश्च गुणः सप्तम्या लुक् । ओषधयो वा अपामोद्म ( ७, ५, २, ४७ ) एवमग्रेऽपि तुल्यम् ॥ भस्मन् भस्मनि भस भर्त्सनदीप्त्योः मन् । अभ्रे अभ्रं वा अपां भस्म ( ७, ५, २, ४८ ) ॥ अपां ज्योतिषि विद्युति । विद्युद्वा अपां ज्योतिः ( ७, ५, २, ४९ )॥ अपामयने भूमौ । इयं पृथिव्यपामयनम् ( ७, ५, २, ५० ) ॥ अर्णवे सदने स्थाने प्राणरूपे सा० । प्राणो वा अर्णवः ( ७, ५, २, ५१ ) ॥ समुद्रे सदनं सा० । मनो वै समुद्रः ( ७, ५, २, ५२ ) सरिरे सदने वाचि सा० । वाग्वै सरिरम् ( ७, ५, २, ५३ ) ॥ अपां क्षये चक्षुषि त्वां सा० । चक्षुर्वा अपां क्षयो निवासः ( ७, ५, २, ५४ ) ॥ अपां सधिषि श्रोत्रे त्वां सा० । श्रोत्रं वा अपाऽँ सधिः ( ७, ५, २, ५५ ) ॥ अपां सदने दिवि त्वां सा० । द्यौर्वा अपाऽँ सदनम् (७, ५, २, ५६)॥ अपां सधस्थे अन्तरिक्षे त्वां सा० । अन्तरिक्षं वा अपाऽँ सधस्थम् [ ७, ५, २, ५७ ] ॥ अपां योनौ समुद्रे त्वां सा० । समुद्रो वा अपां योनिः ( ७, ५, २, ५८ ) ॥ अपां पुरीषे सिकतासु त्वां सा० । सिकता वा अपां पुरीषम् ( ७, ५, २, ५९ ) ॥ अपां पाथसि अन्ने त्वां सा० । अन्नं वा अपां पाथः ( ७, ५, २, ६० ) ॥ पञ्च छन्दस्या उपदधाति पञ्चयजुर्भिः । गायत्रेण गायत्र्येव गायत्रं तेन छन्दसा त्वामुपदधामि। त्रैष्टुभेन छन्दसा त्वां सा० । जागतेन छन्दसा त्वां सा० । आनुष्टुभेन छन्दसा त्वां सा० । पाङ्क्तेन छन्दसा त्वां सा० ॥ ५३ ॥

अयं पुरो भुवः । तस्य प्राणो भौवायनः । वसन्तः प्राणायनः गायत्री वासन्ती । गायत्र्यै गायत्रम् । गायत्रादुपाꣳशुः । उपाꣳशोस्त्रिवृत् । त्रिवृतो रथन्तरम् । वसिष्ठ ऋषिः । प्रजापतिगृहीतया त्वया प्राणं गृह्णामि प्रजाभ्यः ॥ ५४ ॥

प्राणभृताः पञ्चाशदिष्टका उपदधाति । पञ्चाशद्भिर्यजुर्भिः । अयं पुरोभुवः । अग्निर्वै पुरः। तद्यत्तदाहपुर इत्यादि निर्वचनम् ।

तस्य प्राणः अपत्यम् भौवायनः वसन्तः ऋतुः। प्राणायनः प्राणस्यापत्यम् नडादित्वात्फक् । गायत्री वासन्ती गायत्रीव वसन्तस्यापत्यम् । गायत्र्यै गायत्रम् । गायत्र्याः सकाशाद्गायत्रम् साम निरमिमीत । गायत्रादुपांशुः । गायत्रात्साम्न उपांशुङ्ग्रहं निरमिमीत। उपांशोः त्रिवृत् । उपांशोर्ग्रहात् त्रिवृत् स्तोमं निरमिमीत । त्रिवृतो रथन्तरम् । त्रिवृतस्तोमाद् रथन्तरं पृष्ठन्निरमिमीत। वसिष्ठ ऋषिः। प्राणो वै वसिष्ठ ऋषिः। प्रजापतिगृहीतया त्वया। गृह्णातिः सृजतिवचनः। प्रजापतिसृष्टया त्वया। प्राणं गृह्णामि प्रजाभ्यः । अयं पुरोभुव इत्यादिभिर्दशभिर्भेदैः प्राणमेवैकमविशेषेण गृह्णामि। प्रजाभ्यो विशेषेणावस्थितम्॥५४॥

का० ( १७, ६, ३ ) व्याघारणवत्प्राणभृतः कर्णसहिता दशदशायं पुर इति प्रतिमन्त्रम् । प्राणभृत्संज्ञका इष्टका व्याघारणवद्दक्षिणे अंसे उत्तरश्रेण्यां दक्षिणश्रोण्यामुत्तरे अंसे कर्णसहिता अक्ष्णया संलग्नाः स्वयमातृण्णापर्यन्तं दश दशोपदधातीति सूत्रार्थः॥ पञ्चाशद्यजूंपि प्राणभृदिष्टकादेवत्यानि प्रतिकण्डिकं दश दश। प्रथमं दशकं दक्षिणे अंसे। कदाचिच्छ्रुयात् प्रजापतेः प्राणा देवा भूत्वोत् क्रान्ताः तदा तान् प्रजापतिरूचे किमित्युत् क्रम्यते मामुपगच्छतेति ततः प्राणास्तमूचुर्वयमन्नं विना स्थातुं न शक्नुमस्तदन्नं त्वया सृज्यते चेत्तिष्ठामस्ततः प्रजापतिनोक्तं वयमुभयेऽन्नं सृजामेति तथेत्युक्त्वा प्राणाः प्रजापतिश्चैतदन्नमसृजंस्तेन प्राणान् पुष्णन्तीति इष्टकानां प्राणभृत्संज्ञेत्युक्तं श्रुत्या प्रजापतेर्विस्रस्तात् प्राणा उदक्रामन्नित्यादिकया [ ८, १, १, ३ ) अथ मन्त्रव्याख्या । योऽयं पुरो भुवश्चाग्निर्वर्त्तते हे इष्टके ! त्वं तद्रूपासि प्राण एवाग्निर्भूत्वा पुरस्तिष्ठति अतोऽग्निरूपां त्वामुपदधामीति शेषः एवमग्रेऽपि। पुरस्तादुपधीयते प्रागुद्ध्रियेत प्राकुपचर्यत इति पुरोऽग्निः । भवति सर्वरूपेणेति भवत्यस्मात् सर्वमिति वा भुवोऽग्निः तद्रूपेष्टका ध्येयेति भावः। तदुक्तं श्रुत्या [ ८, १, १, ४ ) अयं पुरो भुव इत्यग्निर्वै पुरस्तायत्तमाह पुर इति प्राञ्चᳪं ह्यग्निमुद्धरन्ति प्राञ्चमुपचरन्त्यथ यद्भुव

इत्याहाग्निर्वै भुवोऽग्नेर्हीद॑ सर्वं भवति प्राणो ह्यग्निर्भूत्वा पुरस्तात्स्थौ तदेव तद्रूपमुपदधातीति ॥ प्राणस्तस्याग्नेरपत्यमिति शेषः अत एव भौवायनः भुवस्याग्नेरपत्यं भौवायनः। नडादित्वात् फक्। इष्टके! प्राणरूपां त्वां सा०। प्राणं तस्माद्रूपादग्नेर्निरमिमीतेति (८, १, १, ५) श्रुतेः ॥ प्राणस्यापत्यं प्राणायनः फक् यो वसन्त ऋतुस्तद्रूपां सा०। वसन्तमृतुं प्राणान्निरमिमीतेति (८, १, १, ५) श्रुतेः ॥ वसन्तस्यापत्यं वासन्ती तस्यापत्यमिति अण् टिड्ढाणञित्यादिना ङीप् या गायत्री छन्दस्तद्रूपां सा०। गायत्रीं छन्दो वसन्तादृतोर्निरमिमीतेति [८, १, १, ५] श्रुतेः ॥ गायत्र्यै गायत्रं चतुर्थी पञ्चम्यर्थे गायत्र्याः सकाशाद्गायत्रं सामोत्पन्नं तद्रूपां सा०। गायत्र्यै छन्दसो गायत्र॑ साम निरमिमीतेति (८, १, १, ५) श्रुतेः ॥ गायत्रात्साम्नो य उपांशुग्रहो निर्मितस्तद्रूपां सा०। गायत्रात्साम्न उपा॑शुं ग्रहं निरमिमीतेति (८, १, १, ५) श्रुतेः ॥ उपांशुग्रहान्निर्मितो यास्त्रिवृत्स्तोमस्तद्रूपां सा०। उपा॑शोर्ग्रहात्त्रिवृत॑ स्तोमं निरमिमीतेति (८, १, १, ५) श्रुतेः। त्रिवृतः स्तोमान्निर्मितं यद्रथन्तरं पृष्ठं तद्रूपां सा०। त्रिवृतः स्तोमाद्रथन्तरं पृष्ठं निरमिमीतेति (८, १, १, ५) श्रुतेः ॥ वसत्यधितिष्ठति सर्वजन्तूनिति वस्ता अतिशयेन वस्ता वसिष्ठः तुरिष्ठेमेयः स्विति इष्ठनि तृचो लोपः सर्वाधार ऋषिः ज्ञाता प्राणस्तद्रूपां सा०। प्राणो वै वसिष्ठ ऋषिर्यद्वै नु श्रेष्ठस्तेन वसिष्ठोऽथो यद्वस्तृतमो वसति तेनो एव वसिष्ठ इति (८, १, १, ६) श्रुतेः॥ प्रजापतिगृहीतया गृह्णातिः सृष्ट्यर्थः प्रजापतिना सृष्टया त्वयेष्टकया स्थापितया प्रजाभ्यः सर्वप्रजार्थं प्राणं गृह्णामि प्रजानां प्राणसिद्ध्यै त्वामुपदधामीत्यर्थः। अयं पुर इत्यादिदशमन्त्रैः प्राणमेवैकं प्रजाभ्यः गृह्णामि। ये नानाकामाः प्राणे तांस्तद्दधाति सकृत् सादयत्येकं तत्प्राणं करोतीति (८, १, १, ६) श्रुतेः ॥ ५४ ॥

**अ॒यं द॑क्षि॒णा वि॒श्वक॑र्मा। तस्य॒ मनो॑ वैश्वकर्म॒णम्। ग्री॒ष्मो मा॑न॒सः। त्रि॒ष्टुब्ग्रै॒ष्मी। त्रि॒ष्टुभः॑ स्वा॒रम्। स्वा॒राद॑न्तर्या॒मः। अ॒न्त॒र्या॒मात् प॑ञ्चद॒शः। प॒ञ्च॒द॒शाद् बृ॒हत्। भ॒रद्वा॑ज॒ ऋषिः॑। प्र॒जाप॑तिगृहीतया॒ त्वया॒ मनो॑ गृह्णामि प्र॒जाभ्यः॑ ॥ ५५ ॥**

अथ दक्षिणतः। अयं दक्षिणा विश्वकर्मा। अयं वै वायुर्विश्वकर्मा योऽयम्पवते। एष हीदं सर्वं करोमि तद्यत्तमाह दक्षिणेति तस्मादेष दक्षिणैव भूयिष्ठं वात्यार्यावर्त्तात्। तस्य मनो वैश्वकर्मण इत्यादि तुल्यव्याख्यानश्चतसृष्वपि कण्डिकासु॥ ५५॥

एभिर्मन्त्रैस्तृतीयं दशकं दक्षिणश्रोणेरारभ्योपधेयम्। विश्वं करोति सर्वं सृजतीति विश्वकर्मा वायुरय दक्षिणा दक्षिणस्यां दिशि आर्यावर्ताद्भूयो वाति तद्रूपां स्वां सा०। अयं वै वायुर्विश्वकर्मा योऽयं पवते एष हीदꣳ सर्वं करोति। तद्यत्तमाह दक्षिणेति तस्मादेष दक्षिणैव भूयिष्ठं वाति तद्रूपमुपदधातीति (८, १, ७, श्रुतेः॥ तस्य विश्वकर्मणोऽपत्यं मनोऽत एव वैश्वकर्मणं विश्वकर्मण इदम्। तस्येदमिति अण् इञ्ण्यनपत्य इति प्रकृत्या। मनोरूपां सा०। मनस्तस्माद्रूपाद्वायोर्निरमिमीतेति (८, १, १, ८) श्रुतेः॥ मनसोऽपत्यं ग्रीष्म ऋतुस्तद्रूपां सा०। ग्रीष्मस्येयं ग्रैष्मी ग्रीष्मोत्पन्ना त्रिष्टुप् छन्दस्तद्रूपां सा०। त्रिष्टुभं छन्दो ग्रीष्मादृतोर्निरमिमीतेति (८, १, १, ८) श्रुतेः॥ त्रिष्टुभ उत्पन्नं यत् स्वारं साम तद्रूपां सा०। त्रिष्टुभश्छन्दसः स्वारꣳ साम निरमिमीतेति (८, १, १, ८) श्रुतेः॥ स्वारात् साम्न उत्पन्नो योऽन्तर्यामो ग्रहस्तद्रूपां सा०। स्वारात् साम्नोऽन्तर्यामं ग्रहं निरमिमीतेति (८, १, १, ८) श्रुतेः॥ अन्तर्यामादुत्पन्नो यः पञ्चदश स्तोमस्तद्रूपां सा०। अन्तर्यामाद् ग्रहात् पञ्चदशꣳस्तोमं निरमिमीतेति (८, १, १, ८) श्रुतेः॥ पञ्चदशात् स्तोमादुत्पन्नं यद् बृहत् पृष्ठं तद्रूपां सा०। पञ्चदशात् स्तोमाद् बृहत्पृष्ठं निर० (८, १, १, ८)॥ भरद्वाज ऋषिः बिभर्तीति भरन् वाजमन्नं यः स भरद्वाजोऽन्नधर्त्ता मनः मनसि स्वस्थे अन्नादनेच्छोत्पत्तेः ऋषिः सचेतनो मनोरूपस्तद्रूपां सा०। मनो वै भरद्वाज ऋषिः अन्नं वाजो यो वै मनो बिभर्त्ति सोऽन्नं वाजं भरति तस्मान्मनो भरद्वाज ऋषिरिति (८, १, १, ९) श्रुतेः॥ प्रजापतिगृहीतया धातृसृष्टया त्वयेष्टकया कृत्वा प्रजाभ्यो मनो गृह्णामि एभिर्दशमन्त्रैर्मन एव गृह्णामीत्यर्थः॥ ५५॥

**अयं पश्चाद् विश्वव्यचाः । तस्य चक्षुर्वैश्वव्यचसम् । वर्षाश्चाक्षुष्यः । जगती वार्षी । जगत्या ऋक्समम् । ऋक्समाच्छुक्रः । शुक्रात्सप्तदशः । सप्तदशाद्वैरूपम् । जमदग्निर्ऋषिः । प्रजापतिगृहीतया त्वया चक्षुर्गृह्णामि प्रजाभ्यः ॥ ५६ ॥**

अथ पश्चात् । अयं पश्चाद्विश्वव्यचा । असौ वा आदित्यो विश्वव्यचा । यदाह्येवैष उदेति अथेदं सर्वं व्यचा भवति तद्यत्तमाह । पश्चादिति क्रियानिर्देशः ॥ ५६ ॥

अयं पश्चादित्यादिमन्त्रैर्द्वितीयं दशकमुत्तरश्रोणेरारभ्योपदधाति । पश्चात् प्रतीचीं दिशमञ्चति गच्छतीति पश्चात् प्रतीचीगमनशीलो विश्वं विचाति उदितः सन् प्रकाशयतीति विश्वव्यचा आदित्योऽयं प्रसिद्धस्तद्रूपां सा० । असौ वा आदित्यो विश्वव्यचा यदा ह्येवैष उदेत्यथेदꣳ सर्वं व्यचो भवति तद्यत्तमाह पश्चादिति तस्मादेतं प्रत्यञ्चमेव यन्तं पश्यन्तीति ( ८, १, २, १ ) श्रुतेः ॥ तस्यादित्यस्य सम्बन्धि चक्षुरत एव वैश्वव्यचसं विश्वव्यचसो रवेरुत्पन्नं तद्रूपां सा० । चक्षुस्तस्माद्रूपादादित्यान्निरमिमीतेति ( ८, १, २, २ ) श्रुतेः ॥ चाक्षुष्यः चक्षुष उत्पन्नः वर्षा ऋतुस्तद्रूपां सा० । गर्गादित्वाद्यञ् वर्षा ऋतुं चक्षुषो निरमिमीतेति [ ८, १, २, २ ] श्रुतेः ॥ वर्षाभ्य उत्पन्नं जगतीच्छन्दस्तद्रूपां सा० । जगतीं छन्दो वर्षाभ्य ऋतोर्निरमि० ॥ जगतीच्छन्दस उत्पन्नमृक्समसंज्ञं यत्साम तद्रूपां सा० । जगत्यै छन्दस ऋक्समꣳ साम निरमि० ॥ ऋक्समादुत्पन्नो यः शुक्रग्रहस्तद्रूपां सा० ऋक्समात्साम्नः शुक्रं ग्रहं निरमि० ॥ शुक्रादुत्पन्नो यः सप्तदश स्तोमस्तद्रूपां त्वां सा० । शुक्राद् ग्रहात्सप्तदशꣳ स्तोमं निरमि० ॥ सप्तदशात् स्तोमादुत्पन्नं यद्वै रूपं पृष्ठं तद्रूपां सा० । सप्तदशात् स्तोमाद्वैरूपं पृष्ठं निरमि० ॥ जमदग्निर्ऋषिः जमति जगत् पश्यतीति जमन् अङ्गति सर्वत्र गच्छतीत्यग्निः ऋषति जानाति ऋषिः ईदृशं यच्चक्षुस्तद्रूपां सा० । चक्षुर्वै जमदग्निर्ऋषिर्यदनेन जगत् पश्यत्यथो मनुते तस्माच्चक्षुर्जमदग्निर्ऋषिरिति [ ८, १, २, ३ ] श्रुतेः ॥ प्रजापतिसृष्ट-

या त्वयेष्टकया प्रजार्थं चक्षुर्गृह्णामि दशमन्त्रैश्चक्षुरेव गृह्णामि । स-कृत्सादयत्येतच्चक्षुः करोतीति ( ८, १, २, ३ ) श्रुतेः ॥ ५६ ॥

**इदमुत्तरात् स्वः । तस्य श्रोत्रꣳ सौवम् । शर-च्छ्रौत्री । अनुष्टुप् शारदी । अनुष्टुभ ऐडम् । ऐडा-न्मन्थी । मन्थिन एकविꣳशः । एकविꣳशाद्वैराजम् । विश्वामित्र ऋषिः । प्रजापतिगृहीतया त्वया श्रोत्रं गृह्णामि प्रजाभ्यः ॥ ५७ ॥**

अथोत्तरतः । इदमुत्तरात्स्वः । दिशो वा उत्तरा तद्यत् त-माहोत्तरादित्युत्तरा ह्येतस्मात्सर्वस्माद्दिशः । अथ यत्स्वरि-त्याह । स्वर्गो हि लोको दिशः ॥ ५७ ॥

दशमन्त्रैश्चतुर्थं दशकमुत्तरांसादारभ्योपदधाति ॥ उत्तरस्यामु-त्तरात् उत्तराधरदक्षिणादातिरिति ( पा० ५, ३, ३४ ) आत्प्रत्ययः सर्वस्मादुत्तरभागस्था दिशः यदिदं स्वः स्वर्गो लोकः तां दिक्-स्वर्गरूपां त्वां सा० । क्रियाव्ययविशेषणानां नपुंसकत्वमेकत्वं चे-ति वचनादिदमुत्तरादित्युक्तम् । दिशो वा उत्तरास्तद्यत्ता आहो-त्तरादित्युत्तरा ह्यस्मात्सर्वस्माद्दिशोऽथ यत् स्वरित्याह स्वर्गो हि लोको दिशः श्रोत्रꣳ ह दिशो भूत्वोत्तरं तस्थौ तदेतद्रूपमुपदधा-तीति [ ८, १, २, ४ ] श्रुतेः ॥ तस्य स्वर्गस्य सम्बधि श्रोत्रं की-दृशं सौवम् स्वः इदं सौवं तस्येदमिति अण् द्वारादित्वादैजागमः(पा० ७, ३, ४, ) अव्ययानां भमात्रे टिलोपः श्रोत्ररूपां त्वां सा० । श्रो-त्रं तस्माद्रूपाद्दिग्भ्यो निरमिमीतेति [ ८, १, २, ५ ) श्रुतेः ॥ श्रो-त्रादुत्पन्ना या शरत्तद्रूपां सा० । शरदमृतुꣳ श्रोत्रान्निरमिमीतेति [ ८, १, २, ५ ) श्रुतेः ॥ शरद् उत्पन्नं यदनुष्टुप्छन्दस्तद्रूपां सा० । अनुष्टुभं छन्दः शरद ऋतोर्निरमि० ॥ अनुष्टुभ उत्पन्नं यदै-डं साम तद्रूपां सा० । अनुष्टुभश्छन्दस ऐडꣳ साम निरमि० । ऐडात् साम्न उत्पन्नो यो मन्थी ग्रहस्तद्रूपां सा० । ऐडात् सा-म्नो मन्थिनं ग्रहं निरमि० ॥ मन्थिग्रहादुत्पन्नो य एकविंश स्तो-मस्तद्रूपां सा० । मन्थिनो ग्रहादेकविंशꣳ स्तोमं निरमि० । एक-विंशस्तोमादुत्पन्नं यद्वैराजं पृष्ठं तद्रूपां सा० । एकविंꣳशात् स्तो-

माह्वैराजं पृष्ठं निरमि० ॥ विश्वामित्रं ऋषिः विश्वं सर्वं मित्रं येन मित्रे चर्षाविति दीर्घः तादृश ऋषिः श्रोत्रं श्रद्धयान्यवाक्यश्रवणात्सर्वमित्रं भवति विश्वामित्रर्षिरूपं यत् श्रोत्रं तद्रूपां सा० । श्रोत्रं वै विश्वामित्र ऋषिर्यदनेन सर्वतः शृणोत्यथो यदस्मै सर्वतो मित्रं भवति तस्माच्छ्रोत्रं विश्वामित्रं ऋषिरिति ( ८, १, २, ६ ) श्रुतेः प्रजापतिसृष्टया त्वयेष्टकया प्रजाभ्यः श्रोत्रं गृह्णामीति दशमन्त्रैः श्रोत्रमेव सादयति ये नानाकामाः श्रोत्रे तां स्तद्दधाति सकृत्सादयत्येकं तच्छ्रोत्रं करोतीति ( ८, १, २, ६ ] श्रुतेः ॥ ५७ ॥

इयमुपरि मतिः । तस्यै वाङ्मात्या । हेमन्तो वाच्यः । पङ्क्तिर्हैमन्ती । पङ्क्त्यै निधनवत् । निधनवत आग्रयणः । आग्रयणात्त्रिणवत्रयस्त्रिंशौ । त्रिणवत्रयस्त्रिंशाभ्यां शाक्वररैवते । विश्वकर्म ऋषिः । प्रजापतिगृहीतया त्वया वाचं गृह्णामि प्रजाभ्यः । लोकं पृण छिद्रं पृणाथो सीद ध्रुवा त्वम् । इन्द्राग्नी त्वा बृहस्पतिरस्मिन्योनावसीषदन् । ता अस्य सूददोहसः सोमं श्रीणन्ति पृश्नयः । जन्मन् देवानां विशस्त्रिष्वा रोचने दिवः । इन्द्रं विश्वा अवीवृधन् समुद्रव्यचसं गिरः । रथीतमं रथीनां वाजानां सत्पतिम्पतिम् ॥ ५८ ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां त्रयोदशोऽध्यायः ॥ १३ ॥

---

अथ मध्ये । इयमुपरि मतिः । चन्द्रमा वा उपरि तद्यत्तमाहोपरीति उपरि हि चन्द्रमा । अथ यन्मतिरित्याह । वाग्वै मतिः । समानं व्याख्यानम् । लोकन्तामिन्द्रमिति तिस्रः प्रतीकगृहीताः । लोकम्पृणच्छिद्रम्पृण । ता अस्यसूददोहसः । इन्द्रं विश्वा अवीवृधन् ॥ ५८ ॥

इति उव्वटकृतौ मन्त्रभाष्ये त्रयोदशोऽध्यायः ॥ १३ ॥

दशमन्त्रैः पञ्चमं दशकं रेतः सिग्भ्यामुत्तरां प्रथमां कृत्वा प्रादक्षिण्येनोपधेयम् । उपर्युपरिष्टादिति निपातः उपरि ऊर्ध्वदेशस्थश्चन्द्र इयं मतिः वाक् मन्यते ज्ञायते यया सा मतिः वागेव चन्द्रो भूत्वोपरि यस्तिष्ठति तद्रूपां सा० । चन्द्रमा वा उपरि तद्यत्तमाहोपरीत्युपरि हि चन्द्रमा अथ यन्मतिरित्याह वाग्वै मतिर्वाचा हीदंᳬ सर्वं मनुते वाग्घि चन्द्रमा भूत्वोपरिष्टात्तस्थौ तदेव तद्रूपमुपदधातीति ८, १, ९, ७ श्रुतेः । तस्यै चन्द्ररूपायास्तस्या मतेरुत्पन्नात एव मात्या मतेरियं मात्या या वाक् तद्रूपां सा० । वाचं तस्माद्रूपाच्चन्द्रमसो निरमिमीतेति ८, १,२,८ श्रुतेः ॥ वाचोऽपत्यं वाच्यः वाच उत्पन्नो यो हेमन्तस्तद्रूपां सा० । हेमन्तमृतुं वाचो निरमि० ॥ हेमन्तस्येयं हैमन्ती या पङ्क्तिश्छन्दस्तद्रूपां सा०।पङ्क्तिं छन्दो हेमन्तादृतोर्निरमि० ॥ पङ्क्तेरुत्पन्नं यन्निधनवत्संज्ञं साम तद्रूपां सा० ।पङ्क्त्यै चतुर्थी पञ्चम्यर्थे । पङ्क्त्यै छन्दसो निधवत्साम निरमि० ॥ निधनवतः साम्न उत्पन्नो य आग्रयणो ग्रहस्तद्रूपां सा० ॥ निधनवतः साम्न आग्रयणं ग्रहं निरमि० ॥ आग्रयणादुत्पन्नौ यौ त्रिणवत्रयस्त्रिंशौ द्वौ स्तोमौ तद्रूपां सा० । आग्रयणाद् ग्रहात्त्रिणवत्रयस्त्रिंᳬशौ स्तोमौ निरमि० ॥ त्रिणवत्रयस्त्रिंशाभ्यामुत्पन्ने ये द्वे शाक्वररैवते पृष्ठे त्वां तद्रूपां सा० । त्रिणवत्रयस्त्रिंᳬशाभ्याᳬं स्तोमाभ्याᳬं शाक्वररैवते पृष्ठे निरमि० ॥ विश्वकर्मा विश्वं सर्वं करोतीति विश्वकर्मा ऋषिः वागेव वाचा हि सर्वं कुरुते वाग्रूपां त्वां सा० । वाग्वै विश्वकर्मऋषिर्वाचा हीदंᳬ सर्वं कृतं तस्माद्वाग्विश्वकर्म ऋषिरिति । ८, १, २, ९, ) श्रुतेः ॥ प्रजापतिसृष्टया त्वयेष्टकया प्रजाभ्यः वाचं गृह्णामि एभिर्दशमन्त्रैर्वाचमेव गृह्णाति । सकृत्सादयत्येकां तद्वाचं करोतीति ( ८, १, २, ९ ) श्रुतेः ॥ अथ पञ्च कण्डिकासु प्राणमनश्चक्षुः श्रोत्रवाचां प्रजाभ्यो ग्रहणमित्यस्यार्धद्वयम् । प्रजाभ्य इति चतुर्थीपक्षे प्रजार्थं प्राणादीनां ग्रहणं पञ्चाशदिष्टकास्थापने प्रजानां यजमानापत्यपश्वादीनां प्राणादयः पुष्टा भवन्त्वित्यर्थः । प्रजाभ्य इति पञ्चमीपक्षे प्रजाभ्यो नानालोकेभ्यः सकाशात् प्राणादीन् गृह्णामि मद्वशगान् करोमीति प्राणभृतामुपधानेन सर्वाः प्रजा मद्वशगा भवन्त्वित्यर्थः ॥ का० । १७, ६, ५ । लोकम्पृणा दक्षिणाᳬंसाद्ध्यामध्यात् । आत्मनो दक्षिणकोणादारभ्या मध्यात् अधि स्व-

यमातृण्णापर्यन्तं लोकम्पृणा उपदधाति तासां लोकं पृणेत्यभिमन्त्रणम् । ता अस्येति सूददोहःसंज्ञमन्त्रेणाधिवदनम् स्पृष्ट्वा पठनमिति सूत्रार्थः ॥ का० । १७, ६ ९ । मध्ये पुरीषं निवपति पूर्ववत् । स्वयमातृण्णोपरीन्द्रं विश्वेति मन्त्रेण मृत् क्षेपः । तिस्रः ऋचः प्रतीकोक्ताः पूर्वमुक्तत्वात् । ( १२ अ० ५४–५५–५६ ) क० । ॥ ५८ ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
पुष्कराद्यादि चित्यन्तो रामेन्द्वध्याय ईरितः ॥ १३ ॥

---

# चतुर्दशोऽध्यायः ।

ध्रुवक्षितिर्ध्रुवयोनिर्ध्रुवासि ध्रुवं योनिमासीद साधुया । उख्यस्य केतुं प्रथमं जुषाणा । अश्विनाध्वर्यू सादयतामिह त्वा ॥ १ ॥

द्वितीयां चितिं देवा अपश्यन् तस्याश्चितौ पञ्चाश्विन्यो यजुरन्ताः । अश्विनाध्वर्यू इत्यादि यजुः । प्रथमा विराट् । द्वितीयाद्याश्चतस्रस्त्रिष्टुभः । ध्रुवक्षितिः । या त्वं ध्रुवक्षितिः स्थिरनिवासा । ध्रुवयोनिश्च अनश्वरस्थाना च । ध्रुवाचासि स्वत एव तां त्वां ब्रवीमि । ध्रुवं स्थिरं योनिम् । स्थानम् । आसीद अधितिष्ठ । साधुया साधुम् । द्वितीयैकवचनस्य स्थाने या । उख्यस्याग्नेः । केतुं प्रज्ञानं प्रथममाद्यम् । जुषाणा सेवमाना । उख्यस्याग्नेः प्रथमं प्रज्ञानम् । इयमेव प्रथमा चितिस्तस्याश्चोपरिष्टान्निधीयते तस्मादेवमुच्यते । उत्तरं यजुः । किञ्च अश्विनौ चाध्वर्यू सादयताम् । इह रेतः सिग्वेलायाम् । त्वा त्वाम् । केचिच्चतुर्थमेतम्पादं वर्णयन्ति त्रिष्टुभश्च ॥ १ ॥

त्रयोदशेऽध्याये प्रथमा चितिरुक्ता सा भूलोकरूपा । अयं वै लोकः प्रथमा चितिरिति । ८, २, १, १, । श्रुतेः । चतुर्दशेऽध्याये द्वितीयादिचितित्रयं वक्ष्यते भूमेरूर्ध्वमन्तरिक्षादर्वाग्भागो द्वितीया चितिः । एतां द्वितीयां चितिमपश्यन् यदूर्ध्वं पृथिव्या अर्वाचीनमन्तरिक्षात्तेषामेष लोकः इति । ८, २, १, २, । श्रुतेः । देवैरश्विनौ प्रार्थितौ युवां भिषजौ ततो द्वितीयां चितिमुपधत्तमिति ताभ्यामुक्तं चित्युपधाने किमावयोः फलमिति देवैरुक्तं युवां चित्युपधाने देवानामध्वर्यू भविष्यथ इति ततस्ताभ्यां द्वितीया चितिरुपहितेति श्रुत्या तेऽश्विनावब्रुवन्नित्यादिकयोक्तम् ( ८, २, १, ३,) । तत्रादौ पञ्चाश्विन्य इष्टकाः ॥ द्वितीयचितिमन्त्रा देवदेवत्याः ॥ का०

। १७, ८, १५। आश्विनीर्ध्रुवक्षितिरिति प्रतिमन्त्रम्। पञ्चकण्डिकाभिराश्विनीसंज्ञा इष्टका रेतःसिग्वेलायामुपदधाति प्रतीष्टकं निस्ये इति सूत्रार्थः ॥ पञ्चाश्विनीदेवत्याः प्रथमा विराट् चतस्रस्त्रिष्टुभो यजुरन्ताः। अश्विनावध्वर्यू इत्यादि यजुः । आदित्यास्त्वार्षी त्रिष्टुबेकाधिका पादानियमात्। हे इष्टके! यतस्त्व ध्रुवा स्थिरासि अतो ध्रुवं स्थिरं योनिं स्थानं रेतःसिग्वेलालक्षणमासीद अधितिष्ठ। कीदृशं साधुया साधुं श्रेष्ठं सुपां सुलुगित्यमो यादेशः। कीदृशी त्वं ध्रुवक्षितिः ध्रुवा स्थिरा क्षितिर्निवासो यस्याः सा। ध्रुवा अचला योनिः कारणं यस्याः सा । तथा उख्यस्याग्नेः प्रथममाद्यं केतुं स्थानं प्रथमचितिरूपं जुषाणा सेवमाना । अथ वा अग्निरुख्यस्तस्यैष प्रथमः केतुर्यत् प्रथमा चितिस्तां जुषाणेति। ८, २, १, ४ । श्रुतेः॥ इतः परं यजुः किञ्च अश्विना देवानामध्वर्यू इह रेतःसिग्वेलायां हे इष्टके! त्वा त्वां सादयतामुपधत्ताम। केचिदिदं यजुश्चतुर्थपादेन परिकल्प्य त्रिष्टुभं वदन्ति ॥ १ ॥

कुलायिनी घृतवती पुरंन्धिः स्योने सीद सदने पृथिव्याः । अभि त्वा रुद्रा वसवो गृणन्त्विमा ब्रह्म पीपिहि सौभगाय ॥ अश्विनाध्वर्यू सादयतामिह त्वा ॥ २ ॥

कुलायिनी। कुलायं गृहं तदाकारा कुलायिनी । सा हि रेतःसिग्वेलायामिष्टकाभिरुपहिताभिर्गृहाकारा भवति । घृतवतीभविष्यता योगेन । इह हि वसोर्द्धाराद्या आहुतयः होष्यन्ते । पुरन्धिः। बहु हि इष्टकाजातमियन्धारयति चितिसम्बद्धम् । या त्वमित्थम्भूता तां त्वां ब्रूमः। स्योने सीद सदने पृथिव्याः। सुखरूपे उपविश स्थाने पृथिव्याः। किञ्च। अभि त्वा। अभिगृणन्तु त्वां रुद्रादयः। किञ्च । इमाम् । इमानि ब्रह्माणि पीपिहि आप्यायस्व। सौभगाय महते ऐश्वर्याय । अश्विनेति व्याख्यातम् ॥ २ ॥

हे इष्टके! पृथिव्याः सदने प्रथमचितिरूपे स्थाने स्योने सुख-

रूपे त्वं सीद तिष्ठ । पृथिवी वै प्रथमा चितिस्तस्यै शिवे स्योने सीद सदने इति ( ८, २, १, ५ ) श्रुतः । कीदृशी त्वं कुलायिनी कुलायो नीडमस्त्रियाम् कुलायो नीडं गृहमस्या अस्तीति गृहाकारा । रेतःसिग्वेलायामिष्टकोपचिता सा गृहाकारा भवति । कुलायमिव वै द्वितीया चितिरिति ( ८, २, १, ५ ) श्रुतेः । अत्र सादृश्यार्थे इनिः । तथा घृतवती होष्यमाणाज्ययुता वसोर्धारा ह्यत्र होष्यन्ते । पुरन्धिः पुरं बहु इष्टकाजातं दधातीति पुरु बहुधा धीयते स्थाप्यत इति वा । किञ्च रुद्रा वसवश्चोपलक्षणं सर्वे देवाः त्वा त्वामभिगृणन्तु स्तुवन्तु । किञ्च सौभगाय ऐश्वर्याय इमा इमानि ब्रह्म ब्रह्माणि मन्त्रान् पीपिहि आप्यायस्व मन्त्रान् प्राप्नुहि अस्मन्मन्त्रोपहिता सौभाग्याय भवेति भावः । इमेति सुप आकारः । ब्रह्मेति सुपो लोपः । पि गतौ तुदादिः बहुलं छन्दसीति ( पा० २, ४, ७६ ) शपः श्लुः श्लाविति ( पा० ६, १, १० ) द्वित्वं तुजादीनां दीर्घोऽभ्यासस्येति (पा० ६, १, ७) अभ्यासदीर्घः ॥ आश्विनेत्यादि पूर्ववत् ॥२॥

स्वैर्दक्षैर्दक्षपितेह सीद देवानांᳬसुम्ने बृहते रणाय । पितेवैधि सूनव आ सुशेवा स्वावेशा तन्वा संविशस्व ॥ अश्विनाध्वर्यू सादयतामिह त्वा ॥ ३ ॥

स्वैर्दक्षैः । स्वैर्वीर्यैः । दक्षपिता वीर्यस्य पालयित्री सती इह द्वितीयायां चितौ सीद अवस्थानङ्कुरु । दक्षशब्द इह वीर्यवचनः । प्रयोजनमाह । देवानां सुम्ने सुखाय । कथं न नाम देवाः सुखं प्राप्नुयुरिति । बृहते रणाय । महते च रमणीयाय । यज्ञक्रतवे । किञ्च । पितेवैधि सूनवे । पिता इव भव पुत्राय । आ सुशेवा । मर्यादया साधु सुखयित्री । किञ्च स्वावेशा । स्वावेशेति विभक्तिव्यत्ययः । स्वावेशया । तन्वा आत्मना संविशस्व । अवस्थानङ्कुरु । अश्विनावध्वर्य्यू । उक्तार्थः ॥ ३ ॥

हे इष्टके ! त्वमिह द्वितीयायां चितौ सीद तिष्ठ स्वैर्दक्षैः वीर्यैः सामर्थ्यैः सह दक्षशब्दोऽत्र वीर्यार्थः । स्वेन वीर्येणेह सीदेति ( ८, २, १, ६ ) श्रुतेः । कीदृशी दक्षपिता दक्षं वीर्यं पातीति वीर्यस्य

पालयित्री । किमर्थं स्थातव्यं तत्राह रणाय रमणीयाय बृहते सुम्ने सुम्नाय सुखाय सप्तमी चतुर्थ्यर्थे । देवानाᳪं सुम्नाय महते रणायेति ( ८, २, १, ६, ) श्रुतेः । देवाः सुखिनो भवन्त्विति तिष्ठत्यर्थः । किञ्च आ समन्ताद्भावेन सुशेवा शोभनं शेवं सुखं यस्यास्तादृशी सर्वदा सुखयित्री एधि भव घ्वसोरेद्धाविति एकारः । तत्र दृष्टान्तः पिता सूनव इव यथा पिता जनकः सूनवे पुत्राय सुशेवः सुखयिता भवति तद्वत् । किञ्च स्वावेशा सुखनाविशानि स्वावेशा प्रथमा तृतीयार्थे स्वावेशया सुखप्रवेशवत्या तन्वा शरीरेण संविशस्व अवस्थानं कुरु । स्वावेशेनात्मना संविशस्वेति ( ८, २, १, ६ ) श्रुतेः अश्विनेत्युक्तम् ॥ ३ ॥

पृथिव्याः पुरीषमस्यप्सो नाम तां त्वा विश्वे अभिगृणन्तु देवाः । स्तोमपृष्ठा घृतवतीह सीद प्रजावदस्मे द्रविणायजस्व ॥ अश्विनाध्वर्यू सादयतामिह त्वा ॥ ४ ॥

पृथिव्याः पुरीषम् । या त्वम् । पृथिव्याः प्रथमायाश्चितेः पुरीषमिवासि । पृथिवी वै प्रथमा चितिः तस्या एतत् पुरीषमिव यद् द्वितीयेति श्रुतिः । अप्सो नाम । अप्स इति रसपर्यायं दर्शयति । अपः सनोतीत्यप्सः । अपां हि रसो गुणः । तस्य वा एतस्य यजुषो रस एवोपनिषदित्येतच्छ्रुतिर्दर्शयति । तां त्वामुपधीयमानां विश्वेदेवा अभिगृणन्तु अभिष्टुवन्तु । त्वमपि च स्तोमपृष्ठा घृतवती च इह सीद द्वितीयस्यां चितौ । यां स्तोमस्यान्तᳪं स्यमानो भवति तेरेषास्तोमपृष्ठा घृतवती च वसोर्द्धारादिभिर्होमैः । ततः । प्रजावदस्मे द्रविणा यजस्व । प्रजासंयुक्तानि अस्मभ्यम् । द्रविणानि देहि । यजतिर्दानार्थः । शेषमुक्तम् ॥ ४ ॥

हे इष्टके ! त्वं पृथिव्याः प्रथमचितेः पुरीषं पूरकं वस्त्वसि । पृथिवी वै प्रथमा चितिस्तस्या एतत्पुरीषमिव यद् द्वितीयेति ( ८,

२, १, ७ श्रुतेः । पृणाति पूरयति पुरीषम् । शॄपॄभ्यां किदिति ( उणा० ४, २७ ) पृणातेरीषन्प्रत्ययः किञ्च कित्त्वादुदोष्ठ्यपूर्वस्येति (पा० ७, १, १०२ ) उदादेशो रपरत्वं च नित्त्वादाद्युदात्तः । अपः सनोति ददातीत्यप्सो नामापां कारणीभूतो रसश्च त्वमसि । तां तादृशीं प्रथमचितिपूरिकां जलदरसभूतां त्वा त्वां विश्वे सर्वे देवा अभिगृणन्तु सर्वतः स्तुवन्तु । किञ्च स्तोमपृष्ठाः स्तोमास्त्रिवृदादयः पृष्ठानि रथन्तरादीनि पठिष्यमाणानि यस्यां सा तादृशी स्तोमपृष्ठवती । घृतवती होष्यमाणाज्ययुना सतीह द्वितीयचितौ सीद तिष्ठ । ततः प्रजावत् पुत्रपौत्रादिप्रजायुक्तं द्रविणा द्रविणं धनमस्मे अस्मभ्यमायजस्व समन्ताद् देहि यजतिरिह दानार्थः । अस्मे इति सुपां सुलु गिति विभक्तेः शेआदेशः ॥ व्याख्यातमन्यत् ॥ ४ ॥

आदि॑त्यास्त्वा पृ॒ष्ठे सा॑दयाम्य॒न्तरि॑क्षस्य ध॒र्त्री वि॒ष्टम्भ॑नीं दि॒शाम॑धि॒पत्नीं॒ भुव॑नानाम् ऊ॒र्मिर्द्र॒प्सो अ॒पाम॑सि वि॒श्वक॑र्मा त॒ ऋषि॑र॒श्विना॑ध्व॒र्यू सा॑दयतामि॒ह त्वा॑ ॥ ५ ॥

आदित्यास्त्वा । या त्वम् । ऊर्मिः कल्लोलराशिः द्रप्सः रसः अपामसि । यस्याश्च ते तव विश्वकर्मा प्रजापति ऋषि द्रेष्टा । तां त्वाम् । अदित्याः पृथिव्याः पृष्ठे प्रथमायाश्चितेरुपरि सादयामि । कथं भूतामित्यत आह । अन्तरिक्षलोकस्य धारयित्रीम् । विष्टम्भनीं संस्तम्भनीम् । अन्तरिक्षस्यैव । दिशामधिपत्नीम् । दिशामीशिनीम् । भूतजातानां च शेषं समानोदर्कम् ॥ ५ ॥

हे इष्टके ! अदित्याः प्रथमचितिरूपायाः पृथिव्याः पृष्ठे उपरि त्वा त्वां सादयामि स्थापयामि । किम्भूतां त्वां अन्तरिक्षस्य भुवर्लोकस्य धर्त्रीं धारयित्रीम् । दिशां पूर्वादीनां विष्टम्भनीं संस्तम्भनकर्त्रीं भुवनानां भूतजातानामधिपत्नीं स्वामिनीम् । किञ्च त्वमपां द्रप्सो रस ऊमिरसि रसरूपः कल्लोलस्त्वमसि । विश्वकर्मा प्रजापतिस्ते तव ऋषिः द्रष्टा ॥ तं त्वामश्विनौ सादयतामित्युक्तम् ॥ ५ ॥

शुक्रश्च शुचिश्च ग्रैष्मावृतू अग्नेरन्तःश्लेषोऽसि कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः । ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे ग्रैष्मावृतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम् ॥ ६ ॥

ऋतव्य उपदधाति । शुक्रश्च शुचिश्च व्याख्यातम् ॥ ६ ॥

का० ( १७, ८, १६ ) शुक्रश्च शुचिश्चेत्यृतव्ये पूर्वयोरुपरि । प्रथमचित्युपहितयोर्ऋतव्ययोरुपरि द्वे ऋतव्ये पद्ये प्राग्लक्षणे अनूकमभित उदङ्मुख उपदधाति शुक्रश्च शुचिश्चेति प्रत्येकमुपधाय । ग्रैष्मावृतू इति मन्त्रशेषो द्वे अप्यालभ्य पठ्य इति सूत्रार्थः ॥ उत्कृतिश्छन्दः । शुक्रो ज्येष्ठमासः शुचिराषाढः तौ ग्रैष्मावृतू ग्रीष्मसम्बन्धिनौ ऋत्ववयवौ । अन्यद् व्याख्यातम् ॥ ६ ॥

सजूर्ऋतुभिः सजूर्विधाभिः सजूर्देवैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा ॥ सजूर्ऋतुभिः सजूर्विधाभिः सजूर्वसुभिः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा ॥ सजूर्ऋतुभिः सजूर्विधाभिः सजू रुद्रैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा ॥ सजूर्ऋतुभिः सजूर्विधाभिः सजूरादित्यैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा ॥ सजूर्ऋतुभिः सजूर्विधाभिः सजूर्विश्वैर्देवैः सजूर्देवैर्वयोनाधैरग्नये त्वा वैश्वानरायाश्विनाध्वर्यू सादयतामिह त्वा ॥ ७ ॥

वैश्वदेवीरुपदधाति । विश्वेषान्देवानामार्षम् । सजूर्ऋतु-

भिः । यथा समानजोषणः ऋतुभिः प्रजापतिर्भूत्वा इष्टका उपहितवान् । यथा च समानजोषणः विधाभिः । आपो वै विधाः । अद्भिर्हीदं सर्वं विहितम् । यथा च समानजोषणो देवैः । यथा च समानजोषणः देवैर्वयोनाधैः। प्राणा वै देवा वयोनाधाः । प्राणैर्हीदं सर्वं वयुनं नद्धम् । अथो छन्दांदि वै देवा वयोनाधाः । छन्दोभिर्हीदं सर्वं प्रज्ञानं नद्धम् । एवमहमपि एताभिर्देवताभिः समानप्रीतिर्भूत्वा उपदधामि । अग्नये वैश्वानराय त्वाम् । संवत्सरो वा अग्निर्वैश्वानरः । अश्विनौ च अध्वर्यू सादयतामिह त्वाम् । एवमुत्तरेष्वपि मन्त्रेषु वसुरुद्रादित्यविश्वे देवा योज्याः ॥ ७ ॥

का० ( १७, ८, १७ ) वैश्वदेवीः सजूर्ऋतुभिरिति प्रतिमन्त्रम् । पञ्च मन्त्रैः पञ्च वैश्वदेवीसञ्ज्ञा इष्टकाः पूर्वादिषूपदधातीत्यर्थः ॥ विश्वेदेवदृष्टानि विश्वदेवदेवत्यानि पञ्च यजूंषि । हे इष्टके ! देवानामध्वर्यू अश्विना अश्विनौ तां त्वा त्वामिह स्थाने द्वितीयचितौ सादयताम् । किमर्थं वैश्वानराय विश्वेभ्यः सर्वेभ्यो नरेभ्यो हितायाग्नयेऽग्नितृप्तये अग्नये त्वेति त्वाशब्दो या इति प्रथमार्थे प्रातिपादिकसुपोर्व्यत्ययः तां कां या त्वमृतुभिः सजूः जोषणं जुट् प्रीतिः जुषी प्रीतिसेवनयोः सम्पदादित्वाद्भावे क्विप् समाना जूः प्रीतिर्यस्याः सा सजूः समानस्य छन्दस्यमूर्द्धेति ( पा० ६, ३, ८४ ) समानस्य सादेशः वसन्तादिभिर्या त्वं प्रीतिमती । तथाविधाभिः या त्वं सजूः असि विदधति सृजन्ति जगदिति विधा आपस्ताभिः । आपो वै विधा अद्भिर्हीदꣳ सर्वं विहितमिति ( ८, २, २, ८ ) श्रुतेः। अप एव ससर्जादाविति ( मनुः १, ८ ) स्मृतेश्च । तथा देवैरिन्द्रादिभिश्च सजूः तथा वयो बाल्यादि नह्यन्ति । बध्नन्ति ते वयोनाधाः प्राणा देवा दीप्यमानास्तैश्च सजूः । प्राणा वै वयोनाधाः प्राणैर्हीदꣳ सर्वं वयुनं नद्धमिति ( ८, २, २, ८, ) श्रुतेः । यद्वा वयोनाधैर्देवैश्छन्दोभिः सजूः । अथो छन्दांꣳसि वै देवा वयोनाधाश्छन्दोभिर्हीदꣳ सर्वं वयुनं नद्धमिति ( ८, २, २, ८ ) श्रुतेः । एव-

मुत्तरमन्त्रेष्वपि। यद्वा ऋतुदेवप्राणान् जनयित्वा तैः सजूः सयुग्भूत्वा प्रजापतिर्यथा त्वामुपहितवानेवमहमप्यग्नये त्वामुपदधमीति शेषः। अश्विनौ चेह त्वां सादयताम् तदृतून् प्राजनयदृतुभिर्वै सयुग्भूत्वेति ( ८, २, २, ८, श्रुतेः॥ उत्तरचतुर्मन्त्रेषु वसुभिः रुद्रैः आदित्यैर्विश्वैर्देवैः सजूरिति विशेषः। शेषं पूर्वतुल्यम्॥ ७॥

**प्राणं मे पाहि। अपानं मे पाहि। व्यानं मे पाहि। चक्षुर्म उर्व्या विभाहि। श्रोत्रं मे श्लोकय। अपः पिन्व। ओषधीर्जिन्व। द्विपादव। चतुष्पात्पाहि। दिवो वृष्टिमेरय॥ ८॥**

प्राणभृत उपदधाति। प्राणं मे पाहि। गोपाय। अपानं मे पाहि। व्यानं मे पाहि चक्षुर्म उर्व्या विभाहि। विभावय। श्रोत्रं मे मम श्लोकय। श्लोक इति वाग्नामसु पठितम्। श्लोकं पाहि श्रोत्रं कुरु। अपस्या उपदधाति। अपः पिन्व। पिन्वतिः सेचनार्थः। ओषधीर्जिन्व। जिन्वतिः प्रीतिकर्मा। द्विपादव। द्विपादमिति विभक्तिव्यत्ययः। अवगोपाय। चतुष्पात्पाहि। चतुष्पादं गोपाय। दिवो वृष्टिमेरय। द्युलोकाद् वृष्टिम्। आ ईरय। आगमय॥ ८॥

का० ( १७, ८, २० ) प्राणभृतः प्राणं म इति। पञ्चयजुर्भिः प्राणभृत्संज्ञका इष्टकाः पूर्वादिषूपदधाति॥ पञ्च वायुदेवत्यानि यजूंषि। प्राणो वै वायुर्वायुमेवास्मिन्नेतद्दधातीति ( ८, २, ३, २, ) श्रुतेः॥ हे इष्टके! त्वं मे मम प्राणं प्राणरूपं वायुं पाहि पालय॥ एवमपानं मम पाहि। व्यानं वायुञ्च मे मम पाहि। उर्व्या विस्तीर्णया इष्टया मे चक्षुर्विभाहि विशेषेण प्रकाशय दर्शनसमर्थं कुर्वित्यर्थः। मम श्रोत्रं कर्णेन्द्रियं श्लोकय सङ्घाते शक्तं कुरु। श्लोकृ सङ्घाते ( धातु० ४, ३ ) बहुशब्दश्रवणसमर्थं कुर्वित्यर्थः॥ का० ( १७ ८, २१ ) अपः पिन्वेत्यपस्याः। पञ्चमन्त्रैरपस्यासंज्ञा इष्टका उपदधाति॥ अब्देवत्यानि पञ्च यजूंषि। हे इष्टके! त्वमपो जलानि पिन्व सिञ्च पिन्वतिः सेचनार्थः। ओषधीर्जिन्व प्रीणय जिन्वतिः

प्रीतिकर्मा । द्विपान्मनुष्यशरीरमव रक्ष । चतुष्पात् पशुशरीरं पाहि पालय । दिवो द्युलोकाद्वृष्टिमेरय आ समन्तात् प्रवर्त्तय ॥८॥

मूर्धा वयः प्रजापतिश्छन्दः । क्षत्रं वयो मयन्दं छन्दः । विष्टम्भो वयोऽधिपतिश्छन्दः । विश्वकर्मा वयः परमेष्ठी छन्दः । वस्तो वयो विवलं छन्दः । वृष्णिर्वयो विशालं छन्दः । पुरुषो वयस्तन्द्रं छन्दः । व्याघ्रो वयोऽनाधृष्टं छन्दः । सिंहो वयश्छदिश्छन्दः । पष्ठवाड्वयो बृहती छन्दः । उक्षा वयः ककुप्छन्दः । ऋषभो वयः सतोबृहती छन्दः ॥ ९ ॥

अनड्वान् वयः पङ्क्तिश्छन्दः । धेनुर्वयो जगती छन्दः । त्र्यविर्वयस्त्रिष्टुप्छन्दः । दित्यवाड्वयो विराट् छन्दः । पञ्चाविर्वयो गायत्री छन्दः । त्रिवत्सो वयं उष्णिक् छन्दः । तुर्यवाड्वयोऽनुष्टुप् छन्दः ।( लोकं पृण छिद्रं पृणाथो सीद ध्रुवा त्वम् । इन्द्राग्नी त्वा बृहस्पतिरस्मिन् योनावसीषदन् । ता अस्य सूददोहसः सोमᳬ श्रीणन्ति पृश्नयः । जन्मन् देवानां विशस्त्रिष्वा रोचने दिवः । इन्द्रं विश्वा अवीवृधन् समुद्र व्यचसं गिरः । रथीतमᳬ रथीनां वाजानाᳬ सत्पतिम्पतिम् ॥१०॥

वयस्या उपदधाति । अत्र श्रुत्युक्तं निदानम् । प्रजापतेर्विस्रस्तात्पशव उदक्रामन् छन्दांसि भूत्वा तान् गायत्री भूत्वा वयसाप्नोत्प्रजापतिः । मूर्धावयः प्रजापतिश्छन्दः चतुर्भिर्मन्त्रैर्गायत्रीरूपः प्रजापतिः कल्प्यते । मूर्धा प्रजापतिः प्राधान्यात् । वयः शरीरावस्था । प्रजापतिः स्वयमेव छन्दः । क्षत्रं वयः । प्रजापतिर्वै क्षत्रम्वयोऽभवत् । मयन्दश्छन्दः अनिरुक्तत्वात् प्रजापतिः । मयं सुखं ददातीति मयन्दः । विष्टम्भो

वयः । प्रजापतिर्विष्टम्भः । स हीदं सर्वं विष्टभ्नोति । अधिपति श्छन्दः । प्रजापतिर्वा अधिपतिः । विश्वकर्मा वयः । प्रजापति र्वै विश्वकर्मा । परमेष्ठी छन्दः । आपो वै प्राजपतिः परमेष्ठी । अयमष्टावयवो गायत्रीरूपः प्रजापतिः पञ्चदशवक्ष्यमाणान्पशू न्गृह्णाति । वयसा वयोऽवस्थया जरया । अस्माज्जीर्णम्पशुं वयसा- प्न इति श्रुतिः वस्तो वयो विवलच्छन्दः । वस्तः पशुः विवल- च्छन्दोरूपमाश्रित्योदक्रामत् । तं प्रजापतिर्गायत्रीरूपो वयसा- प्नोत् । एकपदा वै विवलच्छन्दः । तद्विविधं वरमुत्कृष्टम् । पुरुषसम्बन्धि हि तच्छन्दः । एवमुत्तरेष्वपि मन्त्रेषु योज्यम् । वृ- ष्णिर्वयो विशालच्छन्दः । वृष्णिम्मेषं वयसाविवम् । विशालं द्वि- पदाछन्द आप्नोति । पुरुषो वयस्तन्द्रच्छन्दः । तन्द्रच्छन्दः । प- ङ्क्तिः । व्याघ्रो वयोऽनाधृष्टं च्छन्दः विराड् वा । अनाधृष्टं च्छन्दः । सिंहो वयः छदिश्छन्दः । अतिच्छन्दा वै छदिश्छन्दः । अथातो निरुक्तानेव पशून्निरुक्तानि च्छन्दांस्यभिदधाति । पृष्ठवाड्वय इत्यादि दश निगदव्याख्याताः ॥ ९ ॥ १० ॥

का० ( १७, ८, २२ ) वयस्याः पञ्चानूकान्तेषु मूर्द्धा वय इति प्रतिमन्त्रं चतस्रः पुरस्तात् । दक्षिणोत्तरपश्चिमेष्वनूकान्तेषु पञ्च- पञ्च पूर्वे तु चतस्रो वयस्यासंज्ञका इष्टका उपदधात्येकोनविंशति- मन्त्रैरित्यर्थः ॥ एकोनविंशतिर्यजूंषि लिङ्गोक्तदेवतानि । वयःश- ब्दोपेतमन्त्ररूपधेया इष्टकाः । अत्र श्रुत्युक्तं निदानम् । पुरा सृष्ट- वतः प्रजापतेर्व्याकुलात् सकाशात् सृष्टाः पशवश्छन्दोरूपमास्थाय निरगच्छन् ततः प्रजापतिरपि गायत्र्यादिच्छन्दोरूपं स्वीकृत्य पशु- सम्बन्धिन्या तत्तद्वयोऽवस्थया तान् पशूनाप्नोत् तदभिधायका मन्त्राः । प्रजापतेर्विस्रस्तात् पशव उदक्रामँश्छन्दाᳪसि भूत्वा तान् गायत्रीछन्दो भूत्वा वयमाप्नोदिति ( ८, २, ३, ९ ) श्रुतेः । तत्रादौ चतुर्भिर्मन्त्रैः प्रजापतेरष्टावयवात्मकं गायत्रीरूपं परिकल्प्यते । मूर्द्धा प्रधानः प्रजापतिश्छन्दो गायत्रीरूपो भूत्वा वयः विभक्तिव्यत्ययः

वयसा कृत्वा पशूनाप्नोदिति शेषः । तद्रूपां त्वामिष्टके उपदधामीति सर्वत्र शेषः । अनेन मन्त्रेण प्रजापतेर्द्वाववयवौ कल्पितौ । प्रजापतिर्वै मूर्द्धा स वयोऽभवत् प्रजापतिश्छन्द इति प्रजापतिरेव छन्दोऽभवदिति ( ८, २, ३, १० ) श्रुतेः ॥ क्षतात्त्रायत इति क्षत्रं तादृशं वयः शरीरावस्था प्रजापतिरभवत् मयं सुखं ददातीति मयन्दमनिरुक्तं छन्दोऽभवत् । क्षत्त्रं वय इति प्रजापतिर्वै क्षत्त्रꣳ स वयोऽभवन्मयन्दं छन्द इति । यद्वा अनिरुक्तं तन्मयन्दमनिरुक्तो वै प्रजापतिः प्रजापतिरेव छन्दोऽभवदिति ( ८, २, ३, ११ ) श्रुतेः ॥ अधिपतिः अधिकं पालकः विष्टभ्नोति जगत् स्तम्भयतीति विष्टम्भः ईदृशः प्रजापतिः वयस्तत्पशुवयोऽवस्थावान् छन्दश्चाभवत् । प्रजापतिर्वै विष्टम्भः स वयोऽभवदधिपतिश्छन्द इति प्रजापतिर्वा अधिपतिः प्रजापतिरेव छन्दोऽभवदिति [ १२ ] श्रुतेः ॥ परमे पदे तिष्ठतीति परमेष्ठी विश्वकर्मा सर्वस्रष्टा प्रजापतिर्वयश्छन्दश्चाभवत् । प्रजापतिर्वै विश्वकर्मा स वयोऽभवत् परमेष्ठी छन्द इत्यापो वै प्रजापतिः परमेष्ठी ता हि परमे स्थाने तिष्ठन्ति प्रजापतिरेव परमेष्ठी छन्दोऽभवदिति ( १३ ) श्रुतेः ॥ एवं प्रतिमन्त्रं द्वौ-द्वाववयवावित्यष्टावयवः प्रजापतिर्गायत्रीरूपः परिकल्पितः तथा चाष्टसंख्योपेतत्वात् सर्वच्छन्दः प्रकृतिभूतं गायत्री छन्दो भूत्वा वयसा तृतीयाया लुक् वयोऽवस्थया वक्ष्यमाणान् पञ्चदश पशून् प्रजापतिरगृह्णात् । तानि वा एतानि चत्वारि वयाꣳसि चत्वारि छन्दाꣳसि तदष्टावष्टाक्षरा गायत्र्येषा वै सा गायत्री या तद्भूत्वा प्रजापतिरेतान् पशून् वयसाप्नोदिति ( ८, २, ३, १४ ) श्रुतेः ॥ बस्तः अजः । द्वितीयैकवचनस्य सुपां स्विति सु आदेशः । वय इति तृतीयालुक् । विवलं विविधं वरमुत्कृष्टं छन्दः एकपदाख्यं छन्दो भूत्वोत्क्रान्तं बस्तं पशुं वयसा तत्तद्वयोऽवस्थया जग्राह । एवमुत्तरमन्त्रेष्वपि विभक्तिपरिणामं कृत्वा तत्तच्छन्दोरूपमास्थाय प्रजापतिस्तत्तद्वयसा तं तं पशुं गृहीतवानिति योज्यम् विशेषस्तु वक्ष्यते । बस्तो वय इति बस्तं वयसाप्नोद्विवलं छन्द इत्येकपदा विवलं छन्द एकपदा ह भूत्वाजा उच्चक्रमुरिति ( ८, २, ४, १ ) श्रुतेः ॥ विशालं द्विपदागायत्रीरूप छन्दो भूत्वा वृष्णिं सेचनसमर्थं मेषं वयसा जग्राह । वृष्णिं वयसाप्नोद्विशालं छन्दः इति । द्विपदा वै विशालं छन्दो द्विपदा ह भूत्वा

वय उच्चक्रमुरिति ( ८, २, ४, २ ) श्रुतेः ॥ तन्द्रं पङ्क्तिश्छन्दो भूत्वोत्क्रान्तं पुरुषं पशुं वयसाप्नोत् । पुरुषं वयसाप्नोत्तन्द्रं छन्द इति पङ्क्तिर्वै तन्द्रं छन्दः पङ्क्तिर्ह भूत्वा पुरुषा उच्चक्रमुरिति ( ८, २, ४, ३ ) श्रुतेः ॥ अनाधृष्टं विराट्छन्दो भूत्वोत्क्रान्तं व्याघ्रं पशुं वयसाग्रहीत् । व्याघ्रं वयसाप्नोदनाधृष्टं छन्द इति विराड् वा अनाधृष्टं छन्दोऽन्नं वै विराडन्नमनाधृष्टं विराड् भूत्वा व्याघ्रा उच्च० ( ४ ) छादयतीति छदिरतिच्छन्दाः छन्दो भूत्वोत्क्रान्तं सिंहं पशुं वयसाग्रहीत् । सिꣳहं वयसाप्नोच्छदिश्छन्द इत्यतिच्छन्दा वै छदिश्छन्दः सा हि सर्वाणि छन्दाꣳसि छादयत्यतिच्छन्दा ह भूत्वा सिꣳहा उच्च० ( ५ ) ॥ अथातो निरुक्तानेव पशून्निरुक्तानि छन्दाꣳस्युपदधातीति ( ५ ) श्रुतेः स्पष्टानि छन्दांसि दशोच्यन्ते । पष्ठे पृष्ठभागे वहतीति पष्ठवाट् पञ्चवर्षः पशुः बृहती छन्दो भूत्वोत्क्रान्तं पष्ठवाहं पशुं वयसाग्रहीत् । पष्ठवाहं वयसाप्नोद् बृहतीच्छन्द इति बृहती ह भूत्वा पष्ठवाह उच्च० ( ६ ) ॥ उक्षा सेचनसमर्थः पशुः आद्यन्तावष्टाक्षरौ पादौ मध्यमो द्वादशाक्षरः सा ककुप् ककुप्छन्दो भूत्वोत्क्रान्तमुक्षाणं पशुं वयसाग्रहीत् । उक्षाणं वयसाप्नोत्ककुप्छन्द इति ककुब्भूत्वोक्षाण उच्च० ( ७ ) ॥ ऋषभः सेचनसमर्थोऽनड्वान् । द्वादशाक्षरत्रिपादा सतोबृहती सा भूत्वोत्क्रान्तमृषभं वयसाग्रहीत् । ऋषभं वयसाप्नोत्सतोबृहती छन्द इति सतोबृहती भूत्वर्षभा उच्च० ( ८ ) ॥ ९ ॥

अनः शकटं वहतीत्यनड्वान् बलीवर्दः पङ्क्तिश्छन्दो भूत्वोत्क्रान्तमनड्वाहं पशुं वयसाग्रहीत् । अनड्वाहं वयसाप्नोत् पाङ्क्तिश्छन्द इति पाङ्क्तिर्ह भूत्वानड्वाह उच्च० ( ९ ) ॥ धेनुः नवप्रसूता सवत्सा गौः जगती छन्दो भूत्वोत्क्रान्तां धेनुं वयसाग्रहीत् । धेनुं वयसाप्नोज्जगती छन्द इति जगती ह भूत्वा धेनव उच्च० ( १० ) ॥ षण्मासात्मकः कालोऽविः तिस्रोऽवयोऽस्य त्र्यविः अष्टादशमासः पशुः त्रिष्टुप्छन्दो भूत्वोत्क्रान्तं त्र्यविं पशुं वयसाग्रहीत् । त्र्यविं वयसाप्नोत्त्रिष्टुप् छन्द इति त्रिष्टुब् ह भूत्वा त्र्यवय उच्च० [ ११ ] ॥ दोऽवखण्डने क्तिन्प्रत्ययः दितिं खण्डनमर्हति दित्यं धान्यं वहति दित्यवाट् यद्वा द्विवर्षः पशुर्दित्यवाट् विराट्छन्दो भूत्वोत्क्रान्तं दित्यवाहं पशुं वयसाग्रहीत् दित्यवाहं वयसाप्नोद्विराट् छन्द इति

विराड् भूत्वा दित्यवाह उच्च०(१२॥पञ्चाविः पञ्चावयो यस्य सः सार्धद्विवर्षः पशुः गायत्री भूत्वोत्क्रान्तं पञ्चाविं पशुमग्रहीत् । पञ्चाविं वयसाप्नोद्गायत्री छन्द इति गायत्री ह भूत्वा पञ्चावय उच्च० ( १३ ) त्रिवत्सः त्रयो वत्साः वत्सराः यस्य सः त्रिवत्सः पशुः उष्णिक् छन्दो भूत्वोत्क्रान्तं त्रिवत्सं जग्राह । त्रिवत्सं वयसाप्नोदुष्णिक् छन्द इत्युष्णिग् ह भूत्वा त्रिवत्सा उच्च० ( १४ ) तुर्यवाट् तुर्यं चतुर्थं वर्षं वहतीति चतुर्वर्षः पशुः अनुष्टुप् छन्दो भूत्वोत्क्रान्तं तुर्यवाहं पशुं प्रजापतिर्वयसाग्रहीत् । तुर्यवाहं वयसाप्नोदनुष्टुप् छन्द इत्यनुष्टुब् ह भूत्वा तुर्यवाह उच्चक्रमुरिति ( ८, २, ४, १५ ) श्रुतेः ॥ एवं श्रुत्यनुसारेण मन्त्रा व्याख्याताः ॥ का० ( १७, ८, २४ ) दक्षिणश्रोणेराधि लोकम्पृणा पूर्ववत् दक्षिणश्रोणिमारभ्य लोकम्पृणा उपदधाति ( १२, ५४—५५—५६ ) पुरीषनिर्वापः सप्तर्चोपस्थानं चेति सूत्रार्थः ॥ इति द्वितीया चितिः सम्पूर्णा ॥ १० ॥

इन्द्राग्नी अव्यथमानामिष्टकां दृꣳहतं युवम् ।
पृष्ठेन द्यावापृथिवी अन्तरिक्षञ्च विबाधसे ॥ ११ ॥

तृतीयां चितिमिद्राग्नी विश्वकर्मा नापश्यत् । तत्र स्वयमातृण्णा प्रथमा । इद्राग्नी अव्यथमानाम् । अनुष्टुप् । पूर्वोऽर्द्धर्च ऐन्द्राग्न उत्तरः स्वयमातृण्णायाः । तत्रोत्तरोऽर्द्धर्चः पूर्वं व्याख्यायते । तत्र विबाधत इति पुरुषव्यत्ययः । येयं पृष्ठेन द्यावापृथिवी अन्तरिक्षञ्च विबाधते अभिभवति । तामिद्राग्नी अव्यथमानाम् अचलन्तीमिष्टकां दृंह तां दृढीकुरु तम् युवं युवाम् ॥ ११ ॥

अथ तृतीया चितिः । इन्द्राग्नी विश्वकर्मा च तन्मन्त्राणामृषिः । का० [ १७, ८, २५ ] तृतीयायाꣳ स्वयमातृण्णामिन्द्राग्नी इति मध्ये । तृतीयायां चितावात्मनो मध्ये स्वयमातृण्णामुपदधाति ॥ अनुष्टुप् पूर्वोऽर्धर्च इन्द्राग्निदेवत्यः उत्तरः स्वयमातृण्णादेवतः । हे इन्द्राग्नी युवं युवामव्यथमानामचलन्तीं भङ्गरहितामिष्टकां स्वयमातृण्णाख्या दृढीकुरुतम् । एवमिन्द्राग्नी प्रत्युक्त्वा इष्टकामाह । हे स्वयमा-

तृण्णे ! पृष्ठेन स्वोपरिभागेन द्यावापृथिवी अन्तरिक्षं च त्वं विबाधसे अभिभवसि लोकत्रयमत्येषि ॥ ११ ॥

**विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे व्यचस्वतीं प्रथस्वतीमन्तरिक्षं यच्छान्तरिक्षं दृꣳहान्तरिक्षं मा हिꣳसीः ॥ विश्वस्मै प्राणायापानाय व्यानायोदानाय प्रतिष्ठायै चरित्राय ॥ वायुष्ट्वाभिपातु मह्या स्वस्त्या छर्दिषा शन्तमेन तया देवतयाङ्गिरस्वद्ध्रुवा सीद ॥१२ ॥**

विश्वकर्मा त्वा प्रजापतिः सादयतु इत्यादि पूर्ववद्व्याख्येयम् अन्तरिक्षस्य पृष्ठेनायुष्ट्वा इति विशेषः ॥ १२॥ शतम् ७००

वायुदेवत्यं विकृतिच्छन्दस्कं यजुः स्वयमातृण्णोपधाने एव विनियुक्तम् । हे स्वयमातृण्णे ! विश्वकर्मा प्रजापतिरन्तरिक्षस्य पृष्ठे उपरि त्वा त्वां सादयतु । किम्भूतां त्वां व्यचस्वतीमभिव्याप्तियुक्तां प्रथस्वतीं प्रथनं प्रथो विस्तारस्तद्युक्ताम् । हे इष्टके ! त्वमन्तरिक्षं यच्छ गन्धर्वाप्सरोगणादिधारकतया नियमय । अन्तरिक्षं दृंह परोपद्रवाभावेन दृढीकुरु । तदन्तरिक्षं मा हिंसीः । किमर्थं विश्वस्मै सर्वस्मै प्राणापानव्यानोदानाख्यवायुवृत्तिलाभाय प्रतिष्ठायै स्वगृहस्थित्यै चरित्राय शास्त्रीयाचरणाय । प्राणेनामेतत् सर्वं लोकदार्ढ्यं सति भवतीति नभोनियमनादि प्रार्थ्यत इति भावः । किञ्च मह्या महत्या स्वस्त्या योगक्षेमसम्पत्त्या शन्तमेनातिशुभकारिणा छर्दिषा तेजोविशेषेण च कृत्वा वायुः त्वा त्वामभिपातु सर्वतो रक्षतु । तवाधिष्ठात्री या देवता तया देवतयानुगृहीता ध्रुवा स्थिरा सती सीदोपविश अङ्गिरस्वत् अङ्गिरसां चयनानुष्ठाने यथा त्वं ध्रुवा स्थिता तद्वत् ॥ १२ ॥

**राज्ञ्यसि प्राची दिक् । विराडसि दक्षिणा दिक् । सम्राडसि प्रतीची दिक् । स्वराडस्युदीची दिक् । अधिपत्न्यसि बृहती दिक् ॥ १३ ॥**

पञ्च दिश्या उपदधाति । वायुरपश्यत् राज्ञ्यसीति प्रतिम-
न्त्रम् ॥ १३ ॥

का० ( १७, ८, २१ ) अनूकेषु पञ्च दिश्या वैश्वदेवीवद्राज्ञ्यसी-
ति प्रतिमन्त्रम् । वैश्वदेवीवादेति प्रतिदिशं रेतःसिग्वेलायामनूके-
षु पञ्च दिश्यासंज्ञका इष्टका उपदधाति पञ्चमीं दक्षिणामुत्तरेणेति
सूत्रार्थः ॥ दिक्शब्दोपेतत्वान्मन्त्राणां दिश्या इष्टकाः । दिग्देव-
त्यानि पञ्च यजूंषि । हे इष्टके ! त्वं राज्ञी राजमाना सती प्राची दि-
क् पूर्वा दिग्भवसि गायत्रीरूपासि । विराट् विविधं राजमाना दक्षि-
णा दिक् असि त्रिष्टुब्रूपासि ॥ सम्राट् सम्यग्राजमाना प्रतीची दि-
क् जगत्यसि ॥ स्वराट् परनिरपेक्षं स्वयमेव राजमाना सती उदी-
ची दिगनुष्टुबसि । अधिकं पातीत्यधिपत्नी बृहती प्रौढोर्ध्वा दिक्
पङ्क्तिरसि ॥ दिक्छन्दोरूपां तां त्वां सादयामीति सर्वत्र शेषः छन्दा
ᳬंसि वै दिशो गायत्री वै प्राची दिक् त्रिष्टुब्दक्षिणा जगती प्रती-
च्यनुष्टुबुदीची पङ्क्तिरूर्ध्वेति श्रुतेः ( ८, ३, १, १४ ) ॥ १३ ॥

विश्वकर्मा त्वा सादयत्वन्तरिक्षस्य पृष्ठे ज्योति-
ष्मतीम् ॥ विश्वस्मै प्राणायापानाय व्यानाय विश्वं
ज्योतिर्यच्छ ॥ वायुष्टेऽधिपतिस्तया देवतयाङ्गिरस्वद्
ध्रुवा सीद ॥ १४ ॥

विश्वज्योतिषमुपदधाति । विश्वकर्मा त्वा । वायुदेवत्या॥१४॥

का० ( १७, ९, ३ ) विश्वकर्मेति विश्वज्योतिषमुपरि पूर्वस्याः
प्रथमोपहिताया विश्वज्योतिष उपरि विश्वज्योतिषमिष्टकामुप-
दधाति ॥ वायुदेवत्यं शाक्करीच्छन्दस्कं यजुः । हे इष्टके ! ज्योति-
ष्मतीं वायुरूपां त्वां विश्वकर्मान्तरिक्षस्य पृष्ठे त्वां सादयतु । अ-
न्तरिक्षस्य पृष्ठे ह्ययं ज्योतिष्मान् वायुरिति ( ८, ३, २, २, श्रुतेः ॥
किञ्च सर्वप्राणादिलाभाय त्वं सर्वं ज्योतिर्यच्छ प्रयच्छ । वायुः
तवाधिपतिः तया देवतया ध्रुवा सती सीद अङ्गिरसां चिताविव ॥१४॥

नभश्च नभस्यश्च वार्षिकावृतू अग्नेरन्तःश्लेषो-
ऽसि कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः क-

ल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः। ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे वार्षिकावृतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम् ॥ १५ ॥

इषश्चोर्जश्च शारदावृतू अग्नेरन्तःश्लेषोऽसि कल्पेतां द्यावापृथिवी कल्पन्तामाप ओषधयः कल्पन्तामग्नयः पृथङ्मम ज्यैष्ठ्याय सव्रताः। ये अग्नयः समनसोऽन्तरा द्यावापृथिवी इमे शारदावृतू अभिकल्पमाना इन्द्रमिव देवा अभिसंविशन्तु तया देवतयाङ्गिरस्वद्ध्रुवे सीदतम् ॥ १६ ॥

ऋतव्या। नभस्यदेवत्या ॥ १५ ॥ १६ ॥

का० ( १७, ९, ४ ) ऋतव्ये नभश्च नभस्यश्चेति। पूर्वर्तव्ययोरुपरि द्वे ऋतव्ये उपदधाति ॥ ऋतुदैवत्यमुत्कृतिच्छन्दस्कं यजुः। नभः श्रावणः नभस्यो भाद्रपदः। शेषं व्याख्यातम् ( १३, अ० २९ क० ) ॥ १५ ॥

का० ( १७, ९, ५ ) इषश्चोर्जश्चेत्यपरे। अपरे ऋतव्ये पूर्वयोरुपरि दधाति। ऋतव्यमुत्कृतियजुः। इषः आश्विनः ऊर्जः कार्त्तिकः शरदृतवौ। शिष्टं प्रोक्तम् ( १३, अ० २९ क० ) १६ ॥

आयुर्मे पाहि। प्राणं मे पाहि। अपानं मे पाहि। व्यानं मे पाहि। चक्षुर्मे पाहि। श्रोत्रं मे पाहि। वाचं मे पिन्व। मनो मे जिन्व। आत्मानं मे पाहि। ज्योतिर्मे यच्छ ॥ १७ ॥

दश प्राणभृतः। आयुर्मे पाहि गोपाय। वाचं मे पिन्व। त्रयोलक्षणां वाचं मे मम पिन्व सिंच। कामैः पूरय। मनो मे जिन्व। जिन्वतिः प्रीतिकर्मा। ज्योतिर्मे यच्छ देहि। सुखबोध्यमन्यत् ॥ १७ ॥

का० [ १७, ९, १ ] पूर्वार्धे प्राणभृतो दशायुर्मे इति प्रतिमन्त्रम् । आत्मनः पूर्वभागे प्राणभृत्संज्ञा दशेष्टका उपदधातीति सूत्रार्थः ॥ दश यजूंषि लिङ्गोक्तदेवत्यानि । हे इष्टके ! मे ममायुः त्वं पाहि रक्ष एवं प्राणमपानं व्यानं चक्षुः श्रोत्रं मे रक्ष मे वाचं पिन्व सिञ्च कामैः पूरय मे मनो जिन्व प्रीणय ममात्मानं ज्योतिः पाहि मह्यं ज्योतिस्तेजो यच्छ ॥ १७ ॥

मा छन्दः । प्रमा छन्दः । प्रतिमा छन्दः । अस्त्रीवयश्छन्दः । पङ्क्तिश्छन्दः । उष्णिक् छन्दः । बृहती छन्दः । अनुष्टुप् छन्दः । विराट् छन्दः । गायत्री छन्दः । त्रिष्टुप् छन्दः । जगती छन्दः ॥ १८ ॥

षट्त्रिंशच्छन्दस्या उपदधाति । मा छन्दः । अयं लोको मित इव मा छन्दः छादनात् । प्रमा छन्दः । अन्तरिक्षलोको वै प्रमा । अन्तरिक्षलोकः अस्माल्लोकात्प्रमित इव दृश्यते प्रतिमाच्छन्दः । द्यौः प्रतिमा सा हि अन्तरिक्षलोके प्रतिमिता । अस्त्रीवयः छन्दः अन्नमस्त्रीवयः । यदेभ्यो लोकेभ्य आहुतिपरिणामभूतमन्नं स्रवति तदस्रीवयः । परतो निरुक्तानि छन्दांसि पङ्क्तिप्रभृतीनि ॥ १८ ॥

का० [ १७ ९, ८ ] छन्दस्या द्वादश-द्वादशाप्ययेषु मा छन्द इति । अप्ययेषु पक्षपुच्छात्मसन्धिषु त्रिषु द्वादश-द्वादश छन्दस्यासंज्ञा इष्टका उपदधातीति सूत्रार्थः ॥ षट्त्रिंशद्यजूंषि लिङ्गोक्तदेवत्यानि । मीयत इति मा मितश्छादनाच्छन्दोऽयं लोकः हे इष्टके ! त्वं तद्रूपासि । अयं वै लोको मायं लोको मित इवेति [ ८, ३, ३, ५ ] श्रुतेः । अस्माल्लोकात् प्रमीयत इति प्रमान्तरिक्षलोकरूपासि । अन्तरिक्षलोको वै प्रमान्तरिक्षलोको ह्यस्माल्लोकात् प्रमित इवेति ( ८, ३, ३, ५ ) श्रुतेः ॥ प्रतिमा द्यौः सा ह्यन्तरिक्षे प्रतिमिता । असौ वै लोकः प्रतिमैष ह्यन्तरिक्षलोके प्रतिमित इवेति ( ८, ३, ३, ५ ) श्रुतेः ॥ अस्त्रीवयः अस्यते क्षिप्यत इत्यस्त्रि अस्त्रि पतनशीलं वयोऽन्नं यस्मात्तदस्त्रिवयः दीर्घश्छान्दसः अस्त्रीवयः लोकत्रयरूपं

छादनाच्छन्दस्तद्रूपासि । यदेषु लोकेष्वन्नं तदस्त्रीवयोऽन्नं वा एभ्यो लोकेभ्योऽन्नꣳ स्रवति तदस्त्रीवय इति ( ८, ३, ३, ५ ) श्रुतेः ॥ इत्येतानि स्पष्टान्येव छन्दांसि पङ्क्त्यादीन्यष्टौ अथो निरुक्तान्येव छन्दाꣳस्युपदधातीति ( ८, ३, ३, ५ ) श्रुतेः ॥ इष्टके ! त्वं पङ्क्त्युष्णिग्बृहत्यनुष्टुब्विराड्गायत्रीत्रिष्टुब्जगतीच्छन्दोरूपासीत्यर्थः ॥ १८ ॥

पृथिवी छन्दः । अन्तरिक्षं छन्दः । द्यौश्छन्दः । समाश्छन्दः । नक्षत्राणि छन्दः । वाक् छन्दः । मनश्छन्दः । कृषिश्छन्दः । हिरण्यं छन्दः गौश्छन्दः । अजा छन्दः । अश्वश्छन्दः ॥ १९ ॥

पृथिवी छन्द इति । यान्येतद्देवत्यानि छन्दांसि तान्युपदधाति । छादयन्तीति छन्दांस्युच्यन्ते ॥ १९ ॥

पृथिव्यादिदेवत्यानि यानि छन्दांसि तद्रूपासि । समाः संवत्सराः स्पष्टमन्यत् । यान्येतद्देवत्यानि छन्दाꣳसि तान्येवैतदुपदधातीति ( ८, ३, ३, ६ ) श्रुतेः ॥ १९ ॥

अग्निर्देवता । वातो देवता । सूर्यो देवता । चन्द्रमा देवता । वसवो देवता । रुद्रा देवता । आदित्या देवता । मरुतो देवता । विश्वे देवा देवता । बृहस्पतिर्देवता । इन्द्रो देवता । वरुणो देवता ॥ २० ॥

अग्निर्देवता वातो देवतेत्येता वै छन्दांसि ता अपि छादयन्ति ॥ २० ॥

इष्टके ! त्वमग्न्यादिदेवतारूपासि तामुपदधामीति सर्वत्र शेषः । अग्न्यादीनां देवतात्वं प्रसिद्धम् । अग्निर्देवता वातो देवतेत्येता वै देवताश्छन्दाꣳसि तान्येवैतदुपधातीति ( ८, ३, ३, ६ ) श्रुतेः ॥२०॥

मूर्धासि राड्ध्रुवासि धरुणा धर्त्र्यसि धरणी । आयुषे त्वा वर्चसे त्वा कृष्यै त्वा क्षेमाय त्वा ॥२१॥

चतुर्दश वालखिल्या उपदधाति द्वाभ्यामनुष्टुप्परोष्णिगन्या-

त आगच्छेत्यर्थः । कीदृशस्त्वं विप्रजूतः जु गतौ विप्रैर्मेधाविभिरनुगतः सेवितः । किमित्यागन्तव्यमिति चेत् सुतावतः छान्दसो दीर्घः सुतवतः सोममभिषुतवतो यजमानस्य ब्रह्माणि हवींषि उप हविषां समीपे वाघतः ऋत्विजो वर्त्तन्त इति शेषः वाघत इति ऋत्विङ्नामसु ( निघ० ३, १८ ) पठितम् ऋत्विजो हविरादाय स्थिता वर्त्तन्त इत्यायाहीत्यर्थः ॥ ८८ ॥

इन्द्रायाहि तूतुजान उप ब्रह्माणि हरिवः । सुते दधिष्व नश्चनः ॥ ८९ ॥

इन्द्रायाहि । हे इन्द्र आगच्छ तूतुजान तूतुजान इति क्षिप्रनाम क्षिप्रं त्वरमाणः । कुत्रागच्छ इति । उपब्रह्माणि हवींषि हे हरिवः । हरी अश्वौ तद्वत् इन्द्र । मतुवसो रुः सम्बुद्धाविति रुत्वम् । एत्य च सुते अभिषुते सोमे दाधिष्व उदारेण धारयस्व । नः अस्माकं स्वभूतं च नः अन्नलक्षणम् ॥ ८९ ॥

हरी अश्वौ विद्येते यस्य स हरिवान् मतुवसो रुः सम्बुद्धौ छन्दसीति रुत्वम् हे हरिवः ! अश्ववन् ! हे इन्द्र । तूतुजानः त्वरमाणः सन् त्वं ब्रह्माणि हवींषि उप हवींषि प्रति आयाहि तूतुजान इति ( निघ० २, १५ ) क्षिप्रनाम । आगत्य सुते सोमेऽभिषुते सति नोऽस्माकं चनः अन्नं सोमरूपं हविः दधिष्व उदरे धारय धि धारणे व्यत्ययेन शपो लुकि द्वित्वं जुहोत्यादित्वात् अभ्यासस्यात्वं छान्दसम् । चन इत्यन्ननाम ( निघ० २, ७ ) ॥ ८९ ॥

अश्विना पिबतां मधु सरस्वत्या सजोषसा । इन्द्रः सुत्रामा वृत्रहा जुषन्ताᳬं सोम्यं मधु ॥ ९० ॥

इति माध्यन्दिनीयायां वाजसनेयिसंहितायां
विंशोऽध्यायः ॥ २० ॥

अश्विना पिबताम् । अश्विनौ पिबताम् मधु मधुरस्वादोपलक्षितम् । सोमम्पिबती । सरस्वत्या च संजोषसा समानसोमपानौ । इन्द्रश्च सुत्रामा वृत्रहा पिबतु मधु । ततो भूयोभूयोऽश्विसरस्वतीन्द्राः जुषन्तां पिबन्ताम् सोम्यम्मधु सोममयम्मधु ॥ २० ॥

इति उव्वटकृतौ मन्त्रभाष्ये विंशतितमोऽध्यायः ॥ २० ॥

आनन्दपुरवास्तव्यजैय्यटाख्यस्य सूनुना ॥
उव्वटेन कृतम्भाष्यं पदवाक्यैः सुनिश्चितैः ॥ १ ॥

---

अश्विसरस्वतीन्द्रदेवत्यानुष्टुप् । अश्विना अश्विनौ मधु मधुरस्वादं सोमं पिबतां भक्षयताम् । कीदृशौ अश्विनौ सरस्वत्या सजोषसा सजोषसौ जोषः प्रीतिः असुन् समानं जोषः प्रीतिर्ययोस्तौ सरस्वत्या सह प्रीतिमन्तावित्यर्थः । किञ्च सुष्ठु त्रायते रक्षति सुत्रामा वृत्रं हतवान् वृत्रहा ईदृश इन्द्रः अश्विनौ सरस्वती च मधु मधुरं सोम्यं सोममयं हविर्जुषन्ताम् सेवन्ताम् मये चेति सोमशब्दात् मयडर्थे यप्रत्ययः सोममयं सोम्यम् ॥ ९० ॥

श्रीमन्महीधरकृते वेददीपे मनोहरे ।
सेकासन्ध्यादिहौत्रान्तो विंशोऽध्यायो निरूपितः ॥ २० ॥